* अथ *

# वासिष्ठीहवनपद्धतिः।

* भाषाटीका-सहिता प्रारभ्यते *

श्रीः




श्रीजगदीश्वर की कृपा से श्री पण्डित विद्याधरजी गौड़ ( प्रिन्सिपल हिन्दुयुनिव सटी-धर्मविभागाध्यक्ष ) के सुपुत्र मेरे प्रियमित्र श्री दौलतरामजी शर्मा ने "वासिष्ठीहवनपद्धति" की जो भाषाटीका आदि की है वह सब पुस्तकों से अच्छी है आजकल जितनी पुस्तकें प्रकाशित हुई हैं, उन सब में त्रुटियां देखकर विस्तृत सम्पादन किया है। यह पुस्तक कर्मकाण्ड के लिए अद्वितीय है। ग्राहक उस पुस्तक से लाभ उठावें।

रेशमकटरा
१८-१२-३९

श्री पण्डित हीरालाल जी
कर्मकाण्डी

# सम्पादकीय

श्रीविश्वनाथ जी की अनुकम्पा से "वासिष्ठी हवनपद्धति" भाषाटीका आदि से जो सम्पादन की गई है वह संग्रहणीय है। अब तक जितनी पुस्तकें प्रकाशित हो चुकी हैं उन सबमें त्रुटियाँ देख इस पुस्तक का विस्तृतरूप से सम्पादन किया गया है। यह पुस्तक विष्णुयाग-महारुद्र-आदि बड़े-बड़े यज्ञों में सहायता दे सकती है; जिसे पण्डितगण तथा छात्रसमूह देख लाभ उठावेंगे। यदि छात्रगण इस पुस्तक को आदि से अन्ततक कण्ठस्थ करलेंगे तो वे इस पुस्तक द्वारा कर्मकाण्ड आदि में बड़े कुशल हो सकेंगे।

इस पुस्तक के सम्पादन में श्री वैदिक-पण्डित चन्द्रभालजी शर्मा गौड़ कर्मकाण्डी ने बहुत ही सहायता पहुँचाई है जिसका उल्लेख नहीं किया जा सकता।

अन्त में "भार्गवभूषणप्रेस" के अध्यक्ष श्रीयुत् पण्डित कैलाशनाथजी भार्गव को हार्दिक धन्यवाद दिये विना नहीं रहा जाता जिन्होंने बड़ी श्रद्धा से प्रकाशन कर धार्मिक जनता को लाभ पहुँचाया है। ईश्वर उन्हें सब प्रकार से उन्नत करें। यही श्रीकाशीविश्वनाथ से प्रार्थना है।

प्रकाशभवनम्
२०-१२-३९
काशी।

श्रीदौलतरामशर्मा, गौड़
वेदाचार्य, पौरोहित्यरत्न,

# विषयसूचीपत्रम्


(१) गणेशपूजनम्
(२) गौरीपूजनम्
(३) स्वस्तिवाचनम्
(४) षोडशमातृकापूजनम्
(५) सप्तघृतमातृकापूजनम्
(६) इन्द्रध्वजपूजनम्
(७) स्थलमातृकापूजनम्
(८) आयुष्मन्त्रजपः
(९) नान्दीश्राद्धम्
(१०) आचार्यादिवरणम्
(११) दिग्रक्षणं प्रोक्षणञ्च
(१२) सर्वतोभद्रपूजनम्
(१३) लिङ्गतोभद्रपूजनम्
(१४) योगिनीपूजनम्
(१५) पञ्चभूसंस्कारः
(१६) ग्रहस्थापनम्
(१७) वरुणकलशस्थापनम्
(१८) कुशकण्डिका
(१९) नवग्रहहोमः
(२०) सर्वतोभद्रदेवताहोमः
(२१) लिङ्गतोभद्रदेवताहोम
(२२) योगिनीदेवताहोमः
(२३) क्षेत्रपालादिबलिः
(२४) पूर्णाहुतिः
(२५) वसोर्द्धाराहोमः
(२६) अवभृथस्नानप्रकारः
(२७) आचार्यादिपूजनम्
(२८) अभिषेकः
(२९) मङ्गलस्नानम्
(३०) उ· रपूजनम्
(३१) प्रधानपीठादिदानम्
(३२) देवादिविसर्जनम्
(३३) ध्वजापताकादिदानम्
(३४) ब्राह्मणभोजनसङ्कल्पः
(३५) भूयसीसङ्कल्पः
(३६) ब्राह्मणकर्तृकआशीर्वादः,
(३७) आरार्तिक्यम्
(३८) मन्त्रपुष्पाञ्जलिः
(३९) प्रदक्षिणा

||४||

# श्री पण्डित विद्याधरजी गौड़ द्वारा सम्पादित और भार्गव पुस्तकालय द्वारा प्रकाशित सस्ती पुस्तकें।

## श्री विद्याधरजी द्वारा सम्पादित

| | |
|---|---|
| रुद्री भा० टी० रफ तथा ग्लेज | १) |
| श्रावणी कर्म प्रयोग ग्लेज | १) |
| विवाह पद्धति स्वर सहित भा० टी० सबसे उत्तम | ।) |
| क्षत्री सन्ध्या =) वैश्य सन्ध्या | =) |
| रुद्री मूल देशी ग्लेज | ।=) |
| ,, ,, एन्टिक | ।) |
| दण्डक साँची एन्टिक | ।=) |
| पुरुष, सूक्त श्रीसूक्त | -) |
| वेदोक्त शिवार्चनपद्धति | ।=) |
| मंत्रसंहिता एन्टिक | ॥-) |
| ,, ,, देशी ग्लेज | ।।=) |
| अश्लेषा ज्येष्ठा शांती भा० टी० | ≡) |
| उपनयनपद्धति मूल | ≡) |
| उपनयनपद्धति भा० टी० साँची | ।) |
| ,, ,, भा० टी० सजिल्द | ॥) |
| पार्वणश्राद्ध मूल | -)। |
| ,, ,, भा० टी० | =) |
| समंत्रकग्रहशान्ति प्रयोगः | ।।।) |
| पन्टिक मूल मोटाक्षर | ।।।) |
| वाशिष्ठीहवनपद्धति मूल ग्लेज | ।-) |
| तीर्थश्राद्ध भा० टी० | -)॥ |
| दशकर्म मूल मोटाक्षर नया एडीशन | ॥) |
| ,, ,, भाषा टीका | ॥=) |
| एकोदिष्ट श्राद्ध भा० टी० | =)॥ |
| ,, ,, मूल | -)॥ |
| प्रेतमञ्जरी भा० टी० | ॥) |
| प्रेतमञ्जरी मूल | ।=) |
| नान्दीमुखश्राद्ध प्रयोग मूल | ≡) |
| विवाहपद्धति ग्लेज मूल | ≡) |
| विवाहपद्धति भा० टी० ग्लेज | ।-) |

||४||

मिलने का पता—भार्गव पुस्तकालय, बनारस।

# पूजनसामग्रीस्मारकपत्रमिदम् ।

| | |
|---|---|
| कुङ्कुमकेसराः— | चन्दनेन समिश्रणार्थं, गणपत्यादिदेवताभ्यः समर्पणार्थम् । |
| रक्तसूत्रम्— | देवताभ्यः समर्पणार्थम् । |
| दशाङ्गः— | धूपसम्पादनार्थम् । |
| धूपाधारपात्रम्— | धूपदहनार्थम् । |
| कार्पासः— | दीपवर्त्तिनिर्माणार्थम् । |
| नैवेद्यम्— | गणपत्यादिदेवताभोगसम्पादनार्थम् |
| ऋतुफलम्— | ,, ,, ,, |
| ताम्बूलम्— | भोगान्तरं समर्पणार्थम् । |
| पूगफलम्— | ,, ,, |
| अक्षताः— | पूजार्थम् । |
| गङ्गोदकम्— | ,, |
| यज्ञोपवीतम्— | ,, |
| अबीरचूर्णम्— | देवतासमर्पणार्थम् । |
| अभ्रकचूर्णम्— | ,, ,, |
| पुष्पमाला— | ,, ,, |
| लवङ्ग— | ताम्बूलार्थम् । |
| एला— | ,, |
| पञ्चामृतम्— | देवतास्नपनार्थम् । |
| पीतसर्षपाः— | विकरणार्थम् । |
| पत्रावली— | तत्तद्वस्तुनिधानार्थम् । |
| शरावाः— | ,, ,, |
| नरिकेलफलानि— | देवतासमर्पणार्थम् । |
| कर्पूरः— | आरार्त्तिककरणार्थम् । |

| | |
|---|---|
| कुशाः-- | पवित्रार्थम् । |
| दूर्वा-- | गणेशाद्याराधनार्थम् । |
| तुलसीपत्रम्— | देवताद्यर्चनार्थम् । |
| बिल्वपत्रम्-- | देवतासमर्पणार्थम् । |
| गन्धाक्षतादिनिधानपात्रम्- | गन्धादिनिधानार्थम् । |
| आचार्यः— | पाठार्थम् । |
| ऋत्विजः— | |
| पञ्चपात्रपात्रम्— | |
| आचमनीपात्रम्— | |
| कुशासनम्— | ब्राह्मणोपवेशनार्थम् । |
| दीपशलाका— | दीपप्रज्वालनार्थम् । |

| | |
|---|---|
| वस्त्राणि— | आचार्यादिवरणार्थम् |
| रुद्राक्षमाला | ,, |
| गोमुखी | ,, |
| कुशासनम् | ,, |
| तिलानि— | हवनार्थम् । |
| अक्षताः— | ,, |
| यवाः— | ,, |
| आज्यम्— | ,, |
| प्रणीता— | हवनार्थम् । |
| प्रोक्षणी— | ,, |
| स्रुक्— | ,, |
| स्रुवः— | |

| | | | |
|---|---|---|---|
| मृत्तिकास्थाली— | तिलादिनिधानार्थम् । | स्वर्णजिह्वा | |
| दक्षिणा— | देवतासमर्पणार्थम् । | स्वर्णप्रतिमा— | प्रतिमार्थम् । |
| वस्त्राणि— | तत्तदेवतासमर्पणार्थम् | नवग्रहप्रतिमा | |

* श्री *

## छप रही है

(१) होमात्मकविष्णुयाग टीका टिप्पणी के सहित मूल्य १)

(२) ग्रहशान्ति सटिप्पण ।।।≈)

(३) महीधरभाष्य परिक्षोपयोगी सटिप्पण, संस्कृतसरलार्थ हिन्दी टीका सहित। कात्यायनश्रौत-सूत्रके प्रमाणसहित। मू० ४।।)

## छप रही है

(४) राज्याभिषेकपद्धति टीका टिप्पणी सहित मू० २)

(५) महारुद्रयाग टिप्पणी सहित १।)

(६) कुण्डसिद्धि ,, ।।।≈)

(७) मूलशान्ति ,, ।।≈)

(८) "निर्णयभास्कर" इस पुस्तक में विवाहसम्बन्धिनिर्णय स-

## छप रही है

प्रमाण हिन्दी टीका सहित ।।≈)

(९) श्राद्धविवेक अर्थात् श्राद्धप्रकाश टीका प्रभृति से सुशोभित १।)

(१०) यजुर्वेदसंहिता का गुटका १)

(११) माध्यन्दिनशाखीयरुद्रपद्धति

(१२) श्रावणी पद्धतिः अर्थात् उपाकर्मप्रयोगः।

शीघ्र से शीघ्र आप लोगों की सेवा में आ रही हैं।

**मिलने का पता—भार्गव पुस्तकालय, बनारस।**

❀ श्रीगणेशाय नमः ❀

# अथ वासिष्ठीहवनपद्धतिः भाषाटीकासहिता ।



मया दौलतरामेण प्रणम्य पितरौ शिवम् ।
क्रियते बालबोधार्थमियं वासिष्ठपद्धतिः ॥ १ ॥

अथ भाषाटीका प्रारभ्यते–यजमान स्नानादि नित्यकर्म से निवृत्त होकर यज्ञशाला में आकर आचमन पवित्र धारण करने के बाद शान्ति पाठ और मङ्गल श्लोक पढ़े और लिखे हुए संकल्प का अर्थात् "विष्णुर्विष्णुः" यहाँ से लेकर "नवग्रहमखेन यक्ष्ये" यहाँ तक पढ़कर प्रतिज्ञा करे, 'महाश्मशाने' से लेकर 'त्रिकण्टक विराजिते' इस शब्द की योजना काशी के अन्तर्गत ही करनी चाहिये अन्यत्र नहीं। यजमान ब्राह्मण हो तो अपने को शर्मा, क्षत्रिय हो तो वर्मा, वैश्य हो तो गुप्त और शूद्र हो तो दास इनका उच्चारण संकल्प में करे ॥

आदौ वस्त्रेण मण्डपादिकरणम् । तदभावे अन्येनाच्छादनम् । ततो यजमानः सपत्नीकः शुभासने प्राङ्मुख उदङ्मुखोवा उपविश्य ।

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजासामग्रीं च सम्प्रोक्ष्य । ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ इति पवित्रधाणं कृत्वा, आचम्य प्राणानायम्य । हस्ते अक्षतपुष्पाणि गृहीत्वा शान्तिमन्त्रान् पठेत् ।

इसके उपरान्त यजमान वस्त्र से उसके अभाव में तृण आदि से मण्डप को आच्छादित करे। पुनः ब्राह्मण स्वस्त्ययन पाठ करे।

ॐ स्वस्ति नऽ इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽ अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्द्दधातु ॥१॥ पृषदश्वा मरुतः पृश्निमातरः शुभंय्यावानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽ अवसाऽऽगमन्निह ॥ २ ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं

पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ३ ॥ शतमिन्नु शरदो
अन्ति देवा यत्रा नश्चक्रा जरसन्तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानो मध्यारीरिषतायुर्गन्तोः
॥ ४ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वेदेवा ऽअदितिः पञ्च जना ऽअ-
दितिर्जातमदितिर्जनित्वम् ॥ ५ ॥ दीर्घायुत्वाय बलाय वर्चसे सुप्रजास्त्वाय सहसा । अथो जीव शरदः
शतम् ॥ ६ ॥ ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः । व-
नस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि
॥ ७ ॥ सुशान्तिर्भवतु । इति स्वस्तिवाचनम् ॥

ततो मङ्गलश्लोकान्पठेत् । सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो
विनायकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणु-
यादपि ॥२॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते॥३॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थ-

सिद्धयर्थं पूजितो यः सुरासुरैः। सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ५ ॥ सर्वमङ्गलमाङ्गल्ये शिवेसर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्। येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ ७ ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव। विद्याबलं दैवबलं तदेव लक्ष्मीपते तेंऽघ्रियुगं स्मरामि ॥ ८ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः। येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ ९ ॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः। देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ १० ॥

श्रीमन्महागणाधिपतये नम ॥ लक्ष्मीनारायणाभ्यां नमः। उमामहेश्वराभ्यां नमः ॥ वाणीहिरण्यगर्भाभ्यां नमः ॥ शचीपुरन्दराभ्यां नमः ॥ मातृपितृचरणकमलेभ्यो नमः ॥ इष्टदेवताभ्यो नमः ॥ कुलदेवताभ्यो नमः॥ ग्रामदेवताभ्यो नमः ॥ स्थानदेवताभ्यो नमः ॥ वास्तुदेवताभ्यो नमः ॥ सर्वेभ्यो देवेभ्यो नमः ॥ ततः सङ्कल्पं कुर्यात्। विष्णुर्विष्णुर्विष्णुरद्य ॐ नमः परमात्मने श्रीपुराणपुरुषोत्तमाय विष्णोराज्ञया प्रवर्त्तमानस्य अद्य ब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टा-

विंशतितमे युगे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तैकदेशान्तर्गतब्रह्मावर्तै-कदेशे श्रीमहाविष्णुप्रजापतिक्षेत्रे (वाराणस्यां तु महाश्मशाने आनन्दवने अविमुक्तवाराणसीक्षेत्रे गौरी-मुखे त्रिकण्टकविराजिते विक्रमशके बौद्धावतारे) वर्तमानसंवत्सरे श्रीसूर्ये अमुकायने अमुकऋतौ अमुक-मासे अमुकपक्षे अमुकतिथौ यथावारांशकलग्नमुहूर्तयोगकरणान्वितायाम् अमुकगोत्रः अमुकप्रवरः अमुकशर्मा सपत्नीकोऽहमात्मनः सपुत्रबान्धवस्य ग्रहकृतराजकृतसर्वविधपीडानिवृत्तिपूर्वकदीर्घायुर्विपुल-पुत्रपौत्राद्यनवच्छिन्नधनधान्यसमृद्ध्यर्थं नवग्रहमखेनाहं यक्ष्ये । तदङ्गत्वेन कलशस्थापनं स्वस्तिपुण्या-हवाचनं मातृकापूजनं वसोर्द्धारापूजनमायुष्यमन्त्रजपं साङ्कल्पिकेन विधिना नान्दीश्राद्धमाचार्या-दिवरणानिच करिष्ये । तत्रादौ निर्विघ्नतासिद्ध्यर्थं पृथिवीगणेशगौरीपूजनं च करिष्ये ।

स्वस्तिवाचन आदि का संकल्प कर पृथ्वीका पूजन करे ।

हस्ते अक्षतान्गृहीत्वा पृथिवीमावाहयेत् ॥ ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्रथाः ॥ ॐ पृथिव्यै नमः, पृथिवीमावाहयामि । ॐ मनोजूति र्जुषतामाज्यस्य बृहस्पतिर्यज्ञमि-

मन्तंनोत्वरिष्टं यज्ञꣳ समिमन्दधातु । विश्वे देवासऽइह मादयन्तामो३म्प्रतिष्ठ ॥ इति प्रतिष्ठाप्य पञ्चोपचारैः सम्पूज्य प्रार्थयेत्—

सशैलसागरां पृथ्वीं यथा वहसि मूर्द्धनि । तथा मां वह कल्याणं सम्पत्सन्ततिभिः सह ॥ इति पूर्वमन्त्रेण प्रार्थनां कुर्यात् । ततः, अनया पूजया पृथिवी प्रीयतां न मम ।

( अथ गणेशपूजनम् ) ॐ एह्येहि हेरम्ब-महेशपुत्र समस्तविघ्नौघविनाशदक्ष । माङ्गल्यपूजा-प्रथमप्रधान गृहाण पूजां भगवन्नमस्ते ॥

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे व्वसोमम । आऽहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम् ॥ आगच्छ भगवन्देव स्वस्थानात्प-रमेश्वर । अहं पूजां करिष्यामि सदा त्वं सम्मुखो भव ॥

इन ऊपर लिखे हुए मन्त्रों का पाठ करके आवाहन और पूजन करे ।

एतत्पाद्यं गणपतये नमः ।

इस मन्त्र से पाद्य देवे ।

एषोऽर्घो गणपतये नमः ।

इस मन्त्र से अर्घ्य देवे ।

एतत् स्नानीयं जलं गणपतये नमः ।

इस मन्त्र से स्नान करावे ।

इदं गन्धं गणपतये नमः ।

इस मन्त्र से गन्ध देवे ।

इमे वस्त्रे यज्ञोपवीतं च गणपतये नमः ।

इस मन्त्र से वस्त्र यज्ञोपवीत देवे ।

इमे अक्षता गणपतये नमः ।

इस मन्त्र से अक्षत देवे ।

इदं पुष्पमाल्यं गणपतये नमः ।

इस मन्त्र से गणेश के लिये पुष्पमाला देवे ।

"ॐ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः । देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्" ॥ इति मन्त्रेण धूपमर्पयेत् ।

इस ऊपर लिखे मन्त्र से गणेश के लिये धूप देवे ।

ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्योवर्चो ज्योतिर्वर्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ इति मन्त्रेण दीपं गणपतये नमः ।

इस मन्त्र से गणेश को दीप देवे ।

'ॐ नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन्" ॥ इति मन्त्रेण नैवेद्यं गणपतये नमः ।

इस मन्त्र से गणेश को नैवेद्य देवे ।

आचमनीयं गणपतये नमः ।

इस मन्त्र से आचमन देवे ।

ताम्बूलं गणपतये नमः ।

इस मन्त्र से ताम्बूल देवे ।

फलं दक्षिणाञ्च गणपतये नमः ।

इस मन्त्र से फल और दक्षिणा देवे ।

ततो विशेषार्घः ।

रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ गृहाणार्घ्यमिमं देव सर्व-देवनमस्कृत । अनेन फलदानेन फलदोऽस्तु सदा मम" ॥

यजमान हाथ से अर्घ्य अर्थात् जल अक्षत पुष्प पूगीफल दूर्वा चन्दन आदि को अर्घ्य पात्र में रखकर ऊपर लिखे इन मन्त्रोंको पढ़कर गणेश के लिये अर्घ देवे ।

ततः पुष्पाञ्जलिः ।

मालतीमल्लिकाजातीशतपत्रादिसंयुताम् । पुष्पाञ्जलिं गृहाणेश तव पादयुगार्पितम् ॥ ॐ एतान्यर्चनानि पाद्यार्घस्नानवस्त्रयज्ञोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्याचमनीयताम्बूलफलदक्षिणापुष्पाञ्जल्यादीनि परिपूर्णानि भवन्तु । अनेन पूजनेन गणपतिः प्रीयताम् ।

पात्र में अथवा हाथ में जल पुष्प लेकर उपरोक्त मन्त्र का पाठ करके "एतान्यर्चनानि" यहाँ से लेकर "परिपूर्णानि भवन्तु" यहां तक पढ़कर सङ्कल्प करे ।

अथ प्रार्थना—

विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥

यजमान हाथ में पुष्प को लेकर ऊपर लिखे हुए मन्त्र से प्रार्थना कर पुष्प गणेश को समर्पण करे ।

## ततो गौरीपूजनम्—

ॐ "विष्णुः ३ श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणोऽह्नि द्वितीये प्रहरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे आनन्दवने महाश्मशाने अविमुक्तवाराणसी क्षेत्रे गौरीमुखे त्रिकंटकविराजते विक्रमशके श्री विष्णोर्बौद्धावतारे अस्मिन् वर्तमाने अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रदमासोत्तमेमासे अमुकमासे अमुकपक्षे

---

(१) सम्वत्सर नामानि—नारदः।

प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः। अङ्गिराः श्रीमुखो भावो युवा धातेश्वरस्तथा॥ १॥
बहुधान्यः प्रमाथी च विक्रमोऽथ वृषास्तथा। चित्रभानुः सुभानुश्च तारणः पार्थिवोऽव्ययः॥ २॥
सर्वजित्सर्वधारी च विरोधी विकृतः खरः। नन्दनो विजयश्चैव जयो मन्मथ-दुर्मुखौ॥ ३॥
हेमलम्बो विलम्बोऽथ विकारी शार्वरी स्रवः। शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ॥ ४॥
स्रवङ्गः कीलकः सौम्यः साधारणविरोधकृत्। परिधावी प्रमादी च आनको राक्षसोऽनलः॥ ५॥
पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्र-दुर्मती। दुन्दुभी रुधिरोद्गारी रक्ताक्षः क्रोधनः क्षयः॥ ६॥

अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथा यथा राशिस्थानेषु सत्सु एवं ग्रहगुण-विशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽत्मनः श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थम् अमुकगोत्रोऽत्पन्नः अमुकप्रकारान्वितोऽहम् अमुकवेदान्तर्गत अमुकशाखाध्यायी अमुकशर्म्माऽहम् इह जन्मनि जन्मान्तरे वा कायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञात-स्पर्शास्पर्शभुक्ताभुक्तपीतापीतादिसकलपातकनिरासपूर्वकमशनभोजनशयनगमनादिकृतकर्मविनाश द्वारा त्रिविधतापोपशमनार्थं मम ऐश्वर्याभिवृद्ध्यर्थमप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्म्याश्चिरकालसंरक्षणार्थं सकलमनेप्सितकामनासिद्ध्यर्थं लोके सभायां राजद्वारे वा सर्वत्र यशोविजयलाभादिप्राप्त्यर्थं तथा च मम सभार्यस्य सपुत्रस्य स बान्धवस्य अखिलकुटुम्बसहितस्य सपशोः समस्तभयव्याधि जरापीडामृत्युपरिहारद्वारा आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं तथा च मम जन्मराशेरखिलकुटुम्बस्य वा जन्म-राशेः सकाशाद्येकेचित् विरुद्धचतुर्थाष्टमद्वादशस्थानस्थितक्रूरग्रहास्तैः सूचितं सूचयिष्यमाणं च यत् सर्वारिष्टं तद्विनाशद्वारा एकादशस्थानस्थितशुभफलप्राप्त्यर्थं पुत्रपौत्रादिसन्ततेरविच्छिन्न-

वृद्ध्यर्थं च चतुर्विधपातकविनाशदुरितक्षयद्वारा धर्मार्थकाममोक्षचतुर्विधलक्ष्मीप्राप्त्यर्थं दीर्घायुः पुष्टि अधिदैवकाऽधिभौतिकाऽध्यात्मिकत्रिविधतापोपशमनार्थं गौरीपूजनं करिष्ये" इति संङ्कल्प्य–

इस ऊपर लिखे संकल्पको पढ़े।

ॐ श्रीश्चं ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मंऽ इषाण सर्व्वलोकम्मं ऽइषाण॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते॥ ॐ गौर्यै नमः, गौरीमावाहयामि स्थापयामि। ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञठं० समिन्दधातु। विश्वे देवास ऽइह मादयन्तामों ३ प्रतिष्ठ। अम्बिका सुप्रतिष्ठिता भव। आसनार्थे[2]

२—देवस्य वामभागे तु दद्यात् मूलेन चासनम्। पौष्पं दारुमयं वास्त्रमाक्षतं कौशतैजसम्। षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकम्। द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः। उपचारेषु सर्वेषु यत्किञ्चिद् दुर्लभं भवेत्। तत्सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत्।

अक्षतान् समर्पयामि । पादयोः पाद्यं[३] समर्पयामि । हस्तयोरर्घं[४] समर्पयामि । अर्घाङ्ग[५]माचमनीयं[६] समर्प-

(३) पाद्यं श्यामाकदूर्वाम्रविष्णुक्रान्ताभिरुच्यते" इति ।

(४) अत्र यकाररहितएवार्घशब्दो वाजसनेयिभिः पठनीयः । पारस्करसूत्रे तथैव प्रायशो दर्शनात् ।
'अर्घ्यपात्रे क्षिपेद् दूर्वा तिलदर्भाग्रसर्षपान् । यवपुष्पाऽक्षतान् गन्धं मूर्ध्नि तेनार्घ्यमाचरेत् । कुशाक्षतयवव्रीहितिल-माषप्रियङ्गवः । सिद्धार्थकसमायुक्तमर्घ्यद्रव्यविशेषतः ।
आपः क्षीरं कुशाग्राणि अक्षता दधि तण्डुलाः । सहसिद्धार्थिका दूर्वा कुङ्कुमं रोचनामधु ।
अर्घोऽयं राजशार्दूल द्वादशाङ्गप्रकीर्तितः "वीर० मि०" ।
आपः क्षीरं कुशाग्राणि दधिसर्पिश्च तण्डुलाः । फलं सिद्धार्थकश्चैव अर्घोऽष्टाङ्गः प्रकीर्तितः ॥

(५) अर्घे स्नाने तथा वस्त्रे उपवीतोपहारयोः । ततोऽविराडित्यनया दद्यादाचमनीयकम् ।

(६) कर्पूरमगुरं पुष्पं दद्याज्जातीफलं मुने । लवङ्गमपि कङ्कोलं शस्तमाचमनीयके ॥
मूलमन्त्रेण वदने दद्यादाचसनीयकम् ।
"उदकंदीयते यत्तु प्रसन्नं फेनवर्जितम् । आचमनाय देवेभ्यस्तदाचमनमुच्यते ।
जातीलवङ्गकङ्कोलैर्शस्तमाचमनीयकम् । केवलं तोयमेवैतद्दद्याद्वाऽन्यैरमिश्रितम् ।
एलालवङ्गगोक्षीरं कङ्कोलंच चतुर्थकम ! आचम्यमिति विज्ञेयं यथालाभं प्रगृह्य च ॥

यामि । स्नानीयं[1] समर्पयामि । पुनराचमनीयं[2] स० । ॐ पञ्च[3] नद्यः सरस्वतीमपियन्ति सस्रोतसः । सरस्वती तु पञ्चधासोदेशे भवत्सरित् ॥ पञ्चामृतं मयाऽऽनीतं पयो दधि घृतं मधु । शर्करा च समायुक्तं स्नानार्थं प्रतिगृह्यताम् । ॐ अम्बिकायै नमः, पञ्चामृतस्नानं समर्पयामि । ॐ देवस्य त्वा सवितुः प्रसवे- ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । इति मन्त्रेण शुद्धोदकस्नानं समर्पयामि, स्नानान्ते आचमनीयं जलं समर्पयामि । ॐ युवा सुवासाः परिवीतऽआगात्स ऽउ श्रेयान्भवति जायमानः । तन्धीरासऽ उन्नयन्ति स्वाध्यो मनसा देवयन्तः । शीतवातोष्णसन्त्राणं लज्जायाः रक्षणं परम् । देहालङ्करणं वस्त्रमतः शान्ति

(१) अन्या निवेदितं तोयं प्रकृतिस्थं सुशीतलम् । हेमादिकुम्भपात्रस्थं स्नानीयं जलमुच्यते" । इति । गन्धादिभिः स्नानं कारयेत् । अक्षता गन्धपुष्पाणि स्नानपात्रे तथा त्रयम् ।

(२) शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम् ।

(३) गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्रमिलितं ज्ञेयं दिव्यं पञ्चामृतं परम्, इति वचनात् मिलितं पञ्चामृतं ग्राह्यम् । प्रकारान्तरम्—दुग्धं दधि क्षौद्रमाज्यं शर्करा च तथैव हि । तस्य तस्य च मन्त्रेण तत्तद्द्रव्यं समर्पयेत् । इति वचनात् पृथक् पृथक् देयम् । अस्मिन्पक्षे—पयः पृथिव्यां, दधिक्राव्णः, मधुव्वाता, घृतं मिमिक्षे अपांरसम्, इति पञ्चभिर्मन्त्रैः स्नानं कार्यम् । तस्य तस्य च मन्त्रेण पयः पृथिव्यामित्यादिनेत्यर्थः ।

प्रयच्छ मे ॥ अम्बिकायै नमः, वस्त्रं समर्पयामि । इत्यनेन पाद्यादिभिः सम्पूज्य, ततः—

इस ऊपर लिखे मन्त्रों को पढ़कर 'गौर्यै नमः' इस मन्त्र से गौरी का आवाहन और पूजन करे ।

"हरिद्रानिर्मितं देवि सौभाग्यं सुखसम्पदाम् । अतस्त्वां पूजयिष्यामि गृहाण परमेश्वरि" ॥

इस मन्त्र से रोली समर्पण करे ।

"कुङ्कुमं कामिनीदिव्यं कामनाकामसम्भवम् । कुङ्कुमेनार्चिता देवी गृहाण परमेश्वरि" ॥ ॐ गौर्यै नमः, इति मन्त्रेण कुङ्कुमं समर्पयेत् ।

इस मन्त्र से कुङ्कुम समर्पण करे ।

"अवीरं च गुलालञ्च चोवाचन्दनमेव च । अवीरेणार्चिता देवि अतः शान्तिं प्रयच्छ मे" ॥

इस मन्त्र से अवीर चढ़ावे ।

"सिन्दूरं शोभनं रक्तं सौभाग्यं प्रियवर्धनम् । सुखदं मोक्षदं चैव सिन्दूरं प्रतिगृह्यताम्" ॥

इस मन्त्र से सिन्दूर समर्पण करे ।

ॐ अक्षन्नमीमदन्त ह्यव प्रिया ऽअधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठयामती योजान्विन्द्र ते हरी॥

अक्षताश्च सुरश्रेष्ठाः कुङ्कुमाक्ताः सुशोभिताः। मया निवेदिता भक्त्या गृहाण परमेश्वरि"॥

इस मन्त्र से अक्षत चढ़ावे।

"माल्यादीनि[2] सुगन्धीनि मालत्यादीनि वै विभो। मयाऽऽहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम्"।

(१) अक्षतास्तु यवाः प्रोक्ता भृष्टाधाना भवन्ति ते। दूर्वाक्षतप्रमाणं तु विज्ञेयं तु शताधिकम्। भृष्टास्तु व्रीह्यो ज्ञेया घृष्टाः खाण्डिक उच्यते॥ लाजा पुंभूम्नि चाक्षताइत्यमरः। अक्षतायवा इति प्रमाणात्। लाजःस्यादार्द्रतण्डुले। नपुंसक मुशीरेऽथ-स्त्रियांपुं भूम्निचाक्षता अक्षतं नद्वयो- पण्डेलाजेषुत्रिष्वहिंसिते। यवेऽपि क्वचिदितिमेदिनी।

अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयः स्मृताः। तदभावे च गोधूमा न तु खण्डिततण्डुलाः।

(२) नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम्। न दूर्वया यजेद्देवीं बिल्वपत्रैर्न भास्करम्। उन्मत्तमर्कं पुष्पं च विष्णोर्वर्ज्यं सदा बुधैः। पुष्पाभावे प्रवालैर्वा तदभावे च कोरकैः। तदभावे फलैःपत्रैस्तदभावे तृणाङ्कुरैः॥ पत्रं वा यदिवा पुष्पं फलं वाऽपि तथैव च। केशवार्थे शिवार्थे वा यथोत्पन्नं तथार्पयेत्। अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधिं विना। यथोत्पन्नं तथा देयं बिल्वपत्रमधो मुखम्। पुष्पं चाधो मुखं नेष्टं तुलसी बिल्ववर्जितम्। तस्माचाधोमुखं देयं बिल्वपत्रं च शङ्करे। पुष्पमूर्ध्वमुखं योज्यं पत्रं योज्यंत्वधोमुखं। फलं त्वधोमुखं योज्यं यथोत्पन्नं तथार्पयेत्॥ मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत्। अङ्गुष्ठतर्जनीभ्यां च देवे पुष्पं निवेदयेत्। अङ्गुष्ठतर्जनीभ्यां च निर्माल्यमपनोदयेत्। पञ्चवक्त्र

ॐ ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः । अश्वाऽइव स जित्वरीर्वीरुधः पारयिष्ण्वः ॥ अम्बिकायै नमः, पुष्पमालां समर्पयामि ।

इस मन्त्र से पुष्प समर्पण करे ।

"वनस्पतिरसोत्पन्नः सुगन्धाढ्यो मनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्" ॥

इस मन्त्र से धूप समर्पण करे ।

"साज्यं च वर्त्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहम्" ॥

इस मन्त्र से दीप समर्पण करे ।

"शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च । आहारो भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम्" ॥

इस मन्त्र से नैवेद्य समर्पण करे ।

---

भवेद्बिल्वं पञ्चवक्त्रः स्वयं शिवः । पञ्चपत्रार्चितो देवो लक्षपत्रार्चितो भवेत् । षड्पत्रेण तु बिल्वेन पूजितश्च स्वयं शिवः । ददाति शिवसायुज्यं सप्तपत्रार्चितस्तथा । षट्पत्रैः सप्तपत्रैश्च बिल्वपत्रैः शिवोऽर्चितः । एकेन लक्षपत्राणां सौवर्णानां फलं लभेदिति ।

गङ्गाजलं समानीतं सुवर्णकलशोद्धृतम् । आचम्य चैव देवेशि शोभनं प्रतिगृह्यताम्" ॥

इस मन्त्र से आचमनीय जल को समर्पण करे।

इदं फलं मया देवि स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥

इस मन्त्र को पढ़कर नारिकेल या फल समर्पण करे।

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शांतिं प्रयच्छ मे ॥

इस मन्त्र से यथाशक्ति दक्षिणा समर्पण करे।

यानि कानि च पापानि जन्मान्तरकृतानि च । तानि तानि विनश्यन्ति प्रदक्षिणपदे पदे ॥

इस मन्त्र से प्रदक्षिणा करे।

---

(१) प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः । दर्शयन् दक्षिणं पार्श्वं मनसाऽपि च दक्षिणः । सप्तत्रिर्वा वेष्टयेद्यत्तत्प्रदक्षिणमुच्यते" "एका चण्ड्याः रवेः सप्त तिस्रो दद्याद्विनायके । चतस्रो विष्णवेदेयाः शिवस्यार्द्धं प्रदक्षिणम्" "पदं पदान्तरे यस्य करौ चलनवर्जितौ। स्तुतिर्वाचि हृदि ध्यानं चतुरङ्गं प्रदक्षिणम् ।"

एकहस्तप्रणामश्च च एका चैव प्रदक्षिणा ।
अकाले दर्शनं चैव हन्ति पुण्यं पुराकृतम् ।"

पूर्ववदर्घ्यपात्रे गन्धादिकृत्वा "रूपं देहि जयं देहि सौभाग्यं देहि देवि मे। पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे"। अम्बिकायै नमः, अर्घं समर्पयामि। इत्यर्घं दत्वा पुष्पाञ्जलिं दद्यात्। ततः प्रार्थनां कुर्यात्-

ऊपर लिखे मन्त्र से पुष्पाञ्जलि देवे।

भक्तार्त्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय। विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥१॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः। नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ २ ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे। भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥३॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय। निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥४॥ त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति। विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव ॥५॥ गणेशपूजने कर्म यन्न्यूनमधिकं कृतम्। तेन सर्वेण सर्वात्मा प्रसन्नोऽस्तु सदा मम ॥ ६ ॥ अनया पूजयाऽम्बिका प्रीयताम् न मम, इति जलं प्रक्षिपेदिति संप्रदायः।

आचरिताम्बिकापूजनविधौ यन्यूनातिरिक्तं तत्परिपूर्णमस्तु। ( विसर्जनं तु कर्मसमाप्त्यन्त इति शिष्टाः)। अथवा गणेशपूजनं कृत्वाऽम्बिकापूजनं विधेयम्। गणपतिं स्थापयित्वा तदुत्तरतोऽम्बिका स्थापयेत्।

ऊपर लिखे श्लोकों से प्रार्थना करे।

इति संक्षेपतो गौरीपूजनं समाप्तम्।

अथ स्वस्तिवाचनम्। तच्च गणपतिपूजनोत्तरं नान्दीश्राद्धोत्तरं वा कार्यम्। नान्दीश्राद्धानन्तरं स्वस्तिवाचनक्रम इतिरुद्रकल्पद्रुमादौ। वचनं तूभयथा दृश्यते। अतो यथारुच्यनुष्ठेयम्। "संपूज्य गन्धमाल्याद्यैर्ब्राह्मणान् स्वस्तिवाचयेत्। इतिव्यासोक्तेरादौब्राह्मणार्चा यथा–

तत्रादौ[1] कलशस्थापनम्। तत्प्रकारः—

(१) स्वर्णं वा राजतं वापि ताम्रं मृन्मयजन्तु वा। अकालमव्रणं चैव सर्वलक्षणसंयुतम्॥ १॥
पञ्चाशाङ्गुलवैपुल्यमुत्सेधे षोडशाङ्गुलम्। द्वादशाङ्गुलकं मूलं मुखमष्टाङ्गुलं तथा॥ २॥
मध्यतिर्यङ्मानेन समन्ताद्द्वापञ्चाशदशाङ्गुलमित्यर्थः।

ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं माहिंसीः॥ इति मन्त्रेण गन्धादिभिः पृथिवीमभिपूज्य कलशाधारभूमिं स्पृष्ट्वा रङ्गवल्लीपद्मं विधाय हस्तेन स्पर्शं कुर्यात्।

"ॐ भूरसि" इस मन्त्र को पढ़कर या "ॐ महीद्यौः" इस मन्त्र को पढ़कर गन्ध आदि उपचारों से पृथ्वी देवी का पूजन कर फिर हाथ से स्पर्श करे।

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥ इति मन्त्रेण कलशे गोमयस्पर्शं कुर्यात्।

इस उपरोक्त मन्त्र से कलश पर गोमय का स्पर्श करे।

---

हैम राजत ताम्राश्च मृन्मया लक्षणान्विताः। यत्रोद्वाहः प्रतिष्ठासु कुम्भाःस्युरभिषेचने॥ १॥ पञ्चाशाङ्गुलवैपुल्या उत्सेधे षोडशाङ्गुलाः। द्वादशाङ्गुलमूलाःस्युर्मुखमष्टाङ्गुलं भवेत्॥ पञ्चाशादङ्गुलोव्यास उत्सेधःषोडशाङ्गुलः। कलशानां प्रमाणन्तु मुखमष्टाङ्गुलं भवेत्। षड्त्रिंशदङ्गुलं कुम्भंविस्तारोन्नति शालिनम्। षोडशं द्वादशं वाऽपि ततो न्यूनं न कारयेत्। ( कालिका० पु० अध्याय ८७ )

( १ ) पृथ्वित्वया धृता लोका देवि त्वं विष्णुना धृता। कलशाधाररूपं हि पवित्रं कुरु चासनम्॥

यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च। श्यामकाञ्चणकाश्चैव सप्तधान्यानि संविदुः॥ १॥

ॐ ओषधयः संमवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मण स्तꣳ राजन्पारयामसि । इति मन्त्रेण स्पृष्टप्रदेशे प्रस्थपरिमितं सप्तधान्यस्य पुञ्जं कृत्वाऽष्टदलं विलिखेत् ।

इस ऊपर लिखे मन्त्र से सप्तधान्य को एकत्र कर उस पर अष्टदल बनावे ।

ॐ धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥ इति मन्त्रेण धान्यं धृत्वा ।

ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः ॥ इति मन्त्रेण धान्यपुञ्जस्योपरि अच्छिद्रं नूतनं हैमं राजतं ताम्रम् असम्भवे मृन्मयं वा त्रिसूत्र्या वेष्टितं चन्दनेनानुलिप्तं दध्यक्षतपुष्पमालाद्यलङ्कृतं कृतस्वस्तिकं कलशं संस्थाप्य ।

इस उपरोक्त मन्त्र से सप्तधान्य पर नवीन सुवर्ण चांदी या मट्टी का चन्दनादियुक्त कलश का स्थापन करे ।

---

( १ ) यवोऽसि धान्यराजस्त्वं सर्वोत्पत्तिकरः शुभः । प्राणिनां जीवनोपायः कलशाधः क्षिपाम्यहम् ॥

( २ ) कलाः कलाहि देवानां दानवानां कलाः कलाः । आदाय निर्मितो यस्मात् कलशस्तेन कथ्यते ॥

ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्ज्जनीस्थो व्वरुणस्य ऽ ऋतसदन्यसि व्वरुणस्य ऽ ऋतसदन-मसि व्वरुणस्य ऽऋतसदनमासीद ॥ इति मन्त्रेण कलशे जलं दद्यात् ।

इस मन्त्र से कलश में जल देवे ।

ॐ त्वां गन्धर्व्वा ऽअखनँ स्त्वा मिन्द्रस्त्वाम्बृहस्पतिः। त्वामोषधे सोमो राजा व्विद्वान्यक्ष्माद-मुच्यत ॥ इति मन्त्रेण तस्मिन् गन्धं प्रक्षिपेत् ।

इस मन्त्र से कलश में गन्ध का प्रक्षेप करे ।

ॐ या ऽ ओषधीः पूर्व्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनु बभ्रूणामहꣳ शतं धामानि सप्त च ।

---

(१) आपस्थ यूयं देवेशाज्ज्योतिषां पतयस्तथा । भूतानां जीवनोपाया अतः कुम्भे क्षिपाम्यहम् ॥

(२) श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुगन्धाय कलशे सङ्क्षिपाम्यहम् ॥

अनामिकया देवानामृषीणां च तथैव च । गन्धानुलेपनं कार्यं प्रयत्नेन विशेषतः । पितॄणामर्पयेद्गन्धं तर्जन्या च सदैव हि । तथैवाङ्गुष्ठमध्याभ्यां धार्यो गन्धः स्वयं बुधैः । अत्र मूलं मृग्यम् ।

(३) सर्वौषध्यः सुगन्धाढ्या दिव्यवृष्टि समुद्भवाः । कलशाप्यायनं करा मङ्गलाय क्षिपाम्यहम् ॥

शङ्खपुष्पी वचा कुष्ठं बालकी नागकेसरम्' इत्यपिसर्वौषधयः कुत्रचिदुक्ताः । मुरा कुष्ठं मांसी हरिद्रे मुरा शैलेय चन्दनम् । मासी वचा कुष्ठं शैलेयं रजनीद्वयम् । सटी (कचोर) चम्पक (चम्पत्वक) मुस्ताश्च सर्वौषधी गणः स्मृतः ॥ १ ॥

इति मन्त्रेण तस्मिन् कुष्ठमांसी हरिद्रा दारुहरिद्रा मुरा शिलाजतु चन्दन कचोर चम्पकत्वक् मुस्तात्मिका सहैव तस्मिन् सर्वौषधीः प्रक्षिप्य ।

इस मन्त्र से सर्वौषधी देवे ।

काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च । इति मन्त्रेण तत्र दूर्वाङ्कुरान् प्रक्षिप्य—

इस मन्त्र से दूर्वा देवे ।

ॐ अम्बे अम्बिकेऽम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ इति मन्त्रेण कलशे न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूणां जम्बूस्थाने उदुम्बरो वा तत्र पञ्चपल्लवान् पञ्चत्वचश्च मन्त्रावृत्या प्रक्षिप्य दद्यात् ।

इस मन्त्र से अथवा "अश्वत्थेवो निषदनम्" इससे कलश में पञ्चपल्लव देवे ।

---

(१) दूर्वे ह्यमृत सम्पन्ने शतमूले शताङ्कुरे । शतं मे हर पापानि शतमायुर्विवर्द्धिनी ।

(२) यज्ञवृक्षा समुद्भूतान्पञ्चपल्लवान्सरसान् शुभान् । अलङ्काराय पञ्चैतान् कलशे संक्षिपाम्यहम् ॥

न्यग्रोधोदुम्बरोऽश्वत्थः चूतप्लक्षस्तथैव च । न्यग्रोधपिप्पल प्लक्षचूतजम्बूतरुद्भवाः । पल्लवाःपञ्च विज्ञेयास्त्वक् चैतेषामपीष्यते ।

ततः—ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥ तस्यते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् । इति मन्त्रेण पवित्रं कलशे प्रक्षिपेत् ।

इस पूर्व मन्त्र से कलश में पवित्री छोड़े ।

ततः—ॐ स्योना पृथिवी नो भवानृक्षरानिवेशनी । यच्छा नः शर्म्म स प्रथाः । इति मन्त्रेण अश्वशालागजशालावल्मीकनदीसङ्गमह्रदराजद्वारगोष्ठप्रदेशादाहृताः सप्त मृत्तिकाः सहैव प्रक्षिप्य ।

इस मन्त्र से सप्तमृत्तिका छोड़े ।

ॐ प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा । इति मन्त्रेण कलशे ताम्बूलं दद्यात् ।

इस मन्त्र से कलश में ताम्बूल देवे ।

---

उद्धृताऽसि वराहेण कृष्णेन शत बाहुना । दंष्ट्राग्रैर्लीलया देवि यज्ञार्थं प्रणमाम्यहम् ॥

(१) अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् । राजद्वाराच्च गोष्ठाच्च मृदमानीय निःक्षिपेत् ॥ ग्रन्थान्तरे पञ्चमृदोऽप्युक्ताः अन्त्यद्वय्यं वर्जयित्वा ।

ॐ याः फलिनीर्या ऽ अफला ऽ अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳ हसः ॥

इति मन्त्रेण कलशे पूगफलं नारिकेलं वा दद्यात् ।

इस मन्त्र से कलश पर पूगीफल या नारिकेल देवे ।

ॐ परि[2] वाजपतिः कविरग्निर्हव्या न्यक्रमीत् । दधद्रत्नानि दाशुषे । इति मन्त्रेण सुवर्णरजतमुक्ता-माणिक्यप्रवालात्मकपञ्चरत्नानि कलशे क्षिपेत् । (अभावे हेम वा । हेमप्रक्षेपेऽप्ययमेव मन्त्रः)—

इससे पञ्चरत्न देवे ।

ॐ हिरण्यगर्भः[3] समवर्त्तताग्रे भूतस्य जातः पतिरेकऽ आसीत् । सदाधार पृथिवीं द्यामुतेमां कस्मै

(१) इदं फलं मया सम्यक् प्रक्षिप्तं कलशे यतः । तेनायं कलशः सम्यक् फलवानस्तु सर्वदा ॥

(२) रत्नगर्भाऽभवद्भूमी रत्नगर्भाश्च भूधराः । कलशो रत्नगर्भः स्यात्तस्माद्रत्नान्यहं क्षिपे ॥
कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्चरत्नानि रत्नशास्त्रविदोविदुः । कालिकापुराणे-
वज्र मौक्तिक वैडूर्य पुष्परागेन्द्रनीलकम् । पञ्चरत्नं प्रशस्तं तु इति कात्यायनोऽब्रवीत् ॥ पद्मपु. ६. ३३. ३८
सुवर्णं रजतं मुक्ता माणिक्यं च प्रवालकम् । एतानि पञ्चरत्नानि सर्वकार्येषु योजयेत् , इति च

(३) हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छमे ॥

 

देवाय॑ ह॒विषा॑ विधेम ॥ इति मन्त्रेण कलशे हिरण्यमन्यद्द्रव्यं वा प्रक्षिपेत् ।

इस ऊपर लिखे मन्त्र से कलश में हिरण्य या अन्य द्रव्य को देवे ।

सुजा॑तो ज्योति॑षा स॒ह शर्म्म॒ वरू॑थ॒ मास॑दत्स्व॒ ÷ । व्वासो॑ऽ अग्ने वि॒श्वरू॑प॒ठं॰ संव्य॑यस्व विभावसो ॥

इति युग्मवस्त्रं वेष्टयित्वा ।

ततः—ॐ पू॒र्णा द॑र्व्वि॒ परा॑पत सु॒पू॑र्णा॒ पुन॒राप॑त । व्व॒स्नेव॒ विक्क्री॑णावहा॒ऽ इष॒मूर्ज॑ठं॰ शतक्रतो ॥

इति तण्डुलपूर्णपात्रं कलशोपरिन्यसेत् । ॐ तत्वा॑ यामि॒ ब्रह्म॑णा॒ वन्द॑मान॒स्तदाशा॑स्ते॒ यज॑मानो॒ ह॒विर्भि॑ः ÷ । अहे॑डमानो॒ व्वरुणे॒ह बो॒ध्युरु॑ शठं॰ स॒मान॒ऽआयु॒ः प्रमो॑षीः ॥ अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि ।

---

(१) शरण्यं सर्वलोकानां लज्जायाः रक्षणं परम् । सुवेशधारकं वस्त्रं कलशं वेष्टयाम्यहम् ॥
(२) धान्यपूर्णमिदं पात्रं स्थापितं कलशे यतः । तेनायं कलशः पूर्णः पूर्णाः सन्तु मनोरथाः ॥
हारीतः--पात्रमक्षतपूर्णं च कलशो परि विन्यसेत् ।
(३) मकरस्थं पाशहस्तमर्णसां पतिमीश्वरम् । आवाहये प्रतीचीशं वरुणं यादसां पतिम् ॥

"सुजातो०"—इससे कलश पर वस्त्र चढ़ा देवे। "पूर्णादर्वि" इस मन्त्र से पूर्णपात्र रखे और "याःफलिनी" इससे नारिकेल रखे 'तत्वायामि' इससे आयुध और शक्ति सहित वरुण का आवाहन करे।

ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा। अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा। ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा॥ इति मन्त्रेण कलशसमीपे पूर्वदिशि एकस्मिन् पात्रे दीपं निदध्यात्। इति कलशस्वरूपम्॥

इस मन्त्र से कलश के समीप पूर्व दिशा में एक पात्र में दीप को रक्खें, यही कलश का स्वरूप है॥

## कलशाधिष्ठातृदेवतानामावाहनञ्चकर्तव्यम्—

ॐ सरितः सागराः शैलास्तीर्थानि जलदा नदाः। आयान्तु यजमानस्य दुरितक्षयकारकाः॥
इति मन्त्रेण कलशे गन्धाक्षतादीनां प्रक्षेपणं कुर्यात्॥

इस मन्त्र से कलश में गन्ध और अक्षत को छोड़ देवे।

ततस्तत्रैव देवता आवाहयेत्—कलाः कला हि देवानां दानवानां कलाः कलाः। सङ्गृह्य निर्मितो यस्मात्कलशस्तेन कथ्यते ॥

ततः—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागरास्सप्त सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः। शान्तिः पुष्टिश्च गायत्री सावित्री कलशे स्थिता। आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः। ततः स्वहस्ते अक्षतादिकं गृहीत्वा—मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु। विश्वेदेवासऽ इहमादयन्तामो३म्प्रतिष्ठ। इति प्रतिष्ठाप्य कलशाधिष्ठात्र्यो विष्ण्वादिदेवताः प्रतिष्ठिता भवन्तु इत्यावाह्य पूजनं कुर्यात्।

इस ऊपर लिखे मन्त्रों को पढ़कर आवाहन और पूजन करे।

तत्रादौ सङ्कल्पं कुर्यात्—महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुक- ॥१६॥

गोत्रस्यामुकशर्म्मणः ( वर्मणः—गुप्तस्य ) सपरिवारस्य निखिलकामनावाप्त्यर्थं कर्तव्यममुकतृप्तिजनकामुककर्मकर्तुं कलशाधिष्ठातृदेवतानां पूजनमहं करिष्ये ॥

पूजन के पहिले ऊपर लिखे हुए सङ्कल्प वाक्य को पढ़े ।

ॐ कलशाधिष्ठातृदेवताभ्यो नमः। इति मन्त्रेण गन्धादिभिः सम्पूज्य पुष्पाञ्जलिं निवेद्य नतिञ्च कुर्यात्।

"कलशाधिष्ठातृदेवताभ्यो नमः" इस मन्त्र से गन्ध, अक्षत, पुष्प, धूप, दीप, नैवेद्य आदि से पूजन कर हाथमें पुष्प लेकर पुष्पाञ्जलि को निवेदन कर प्रणाम करे ।

## ततः—कलशप्रार्थना—

देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तो ये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा।

नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय। सुमङ्गलाय सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते।

पाश पाणे नमस्तुभ्यं पद्मिनीजीवनायक। पुण्याहवाचनं यावत्तावत्वं सन्निधोभव।

इस ऊपर लिखे श्लोकों से कलश की प्रार्थना करे।

## अथ पुण्याहवाचनम्[1]—तद्यथा—

हेमाद्रिपारिजातादिषु स्वस्तिवाचनप्रयोगोऽभिहितः[2]। परन्तु तेष्वपिमिथः क्वचित् क्वचिद्विरोधोऽस्ति। अतो यथा शिष्टाचारं तेभ्यःसंगृह्यप्रयोगो लिख्यते—

(१) "पुण्याहवाचने वर्ज्या ब्राह्मणाः—न तत्र कुनखी काणो हीनाङ्गोऽविकलस्तथा। क्षयरोगी च कुष्ठी च श्यावदन्तोऽभिशापकः। बन्ध्यश्च विधुरो वाऽपि क्रूरस्तु खलसेवकः। वकवृत्तिश्च दम्भी च हेतुको ज्ञानदुर्बलः। सहोपपतिरुन्मत्तो व्यसनी सोमविक्रयी। कन्याविक्रयकृद्वाजिविक्रयी पिशुनोऽनृतः। लोकदुष्टः पराधीनो राजद्रोह परायणः। एते चान्ये च विप्राः स्युर्न वाच्याः स्वस्तिवाचने" "यत्किंचिच्छाद्धिकं भुक्त्वा प्रतिगृह्य च वाऽशुचिः। अब्राह्मणश्च पुण्याहेऽनर्हः स्यादिति मे मतिः।" ॥१७॥

(२) स्वस्तिवाचनकालः—"आदावन्ते च मध्ये च कुर्याद् ब्राह्मणवाचनम्। "आदावन्ते च कर्तव्यमिति वेदविदां मतम्" "पुण्याहवाचनं शस्तमादौ स्यात्सर्वकर्मणाम्"

ततो यजमानः । ( स्वदक्षिणतो युग्मान्[3] ब्राह्मणान् उदङ्मुखानुपवेश्य ) ।

अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय (आचार्यः स्व) दक्षिणेन पाणिना स्वर्णैः[4] पूर्णकलशं[5] ( यजमानाञ्जलौ ) धारयित्वा आशिषः प्रार्थयेत् ।

दीर्घा नागानघो गिरयस्त्रीणि विष्णुपदानि च । तेनायुः प्रमाणेन ( पुण्यं[6] ) पुण्याहं दीर्घमायुरस्तु । ॐ अस्तु दीर्घमायुः । ( अस्तु इति विप्राः ) ।

ॐ त्रीणि॑ प॒दा विच॑क्रमे॒ विष्णु॑र्गो॒पा अदा॑भ्यः । अतो॒ धर्मा॑णि धा॒रय॑न् ॥ १ ॥ तेनायुः

( ३ ) "पुण्याहवाचने विप्रा युग्मा वेदविदो मताः । यज्ञोपवीतिनः शस्ताः प्राङ्मुखाःस्यु पवित्रिणः ।
गन्धपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः ॥

( ४ ) सुवर्णपूर्णमिति वा पाठः ।

( ५ ) अत्र सुवर्णपदमन्येषां पञ्चपल्लव सर्वौषध्यादीनामुपलक्षकम् ।

( ६ ) अयं पाठः परिशिष्टे हेमाद्रौ च नास्ति ।

( १ ) विचक्रमे त्रीणि पदानि विष्णुर्गोपा अहिंस्यकः ।
अतः पदत्रयात्पुण्यं धारयन् कर्म शर्मदः ॥

प्रमाणेन ( पुण्यं ) पुण्याहं दीर्घमायुरस्तु ॥ इति मन्त्रेण कलशं स्वाशिरसा पत्नी शिरसा विवाहादौ संस्कार्यशिरसा च संयोज्य कलशस्थाने कलशं स्थापयित्वा पुनर्गृहीत्वा मन्त्रेण तथैव इति त्रिवारं[2] कुर्यात् । विप्रा इति अस्तु ।

पृथिवी में दोनों गोड़े को निवारण कर अञ्जलि में लेकर आशीः प्रार्थना करे। और कलश को तीन बार भूमि में रक्खे और तीन बार मस्तक में लगावे।

ततः कर्तोदङ्मुखानां[1] युग्मब्राह्मणानां[2] हस्तेषु[3] ॐ "शिवा आपः सन्तु" इति जलं दद्यात् । सन्तु शिवा आपः इति ब्राह्मणाः प्रतिगृह्णीयुः । ॐ "सौमनस्यमस्तु" इति पुष्पं दद्यात् । अस्तु सौमनस्यमिति ब्रा० । ॐ "अक्षतं चारिष्टं चास्तु" इत्यक्षतान्दद्यात् । अस्त्वक्षतमरिष्टं च इति ब्रा० । ॐ गन्धाः पान्तु । सौमङ्गल्यं चास्तु अक्षताः पान्तु इत्यक्षतान् दद्यात् । आयुष्यमस्तु पुष्पाणि पान्तु इति

---

( २ ) अत्र मन्त्रोऽपि त्रिरावर्तनीयः । भेदे मन्त्रावृत्तिः सान्निपातित्वात् इति कात्यायनोक्तेः ।

पुष्पाणि दद्यात्। ॐ सौश्रियमस्तु इति ब्राह्मणाः। ॐ (सफल) ताम्बूलानि पान्तु, इति, ताम्बूलानि

[पृ०१८ की टिप्पणी(हस्तेषु) बौधायनः—अथ पुण्याहवाचनं व्याख्यास्याम इत्युपक्रम्य सपवित्रेषु विप्रपाणिषु जलं दद्यादो माप इति शिवा आपः सन्त्विति ते प्रत्यूचुस्ततो गन्धाः इति गन्धं ददाति सुगन्धाः पान्त्विति प्रतिगृह्णन्ति ततः सुमनस इति पुष्पाणि ददाति सौमनस्यमस्त्विति प्रति गृह्णन्ति अक्षता इत्यक्षता ददाति अक्षतं चारिष्टं चास्त्विति प्रतिगृह्णन्ति ततो दक्षिणां ददाति स्वस्ति दक्षिणाः पान्तु, बहुदेयं चास्तु इति प्रति गृह्णन्तीति।

(शिवा आपः सन्तु) अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्।
ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु ते (मे)॥
(सौमनस्यमस्तु) लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।
सा मे वसतु वै नित्यं सौमनस्यं तथास्तु नः॥
(अक्षतं चारिष्टं चास्तु) अक्षतं चाऽस्तु मे पुण्यं दीर्घमायुर्यशो बलम्।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम॥

(१) "स्वयं प्राङ्मुखउदङ्मुखान् स्वस्तिवाचयेत्" इति आश्वलायनः। बौधायने तु-"कर्तोदङ्मुखोविप्राः प्राङ्मुखा इत्युक्तम्"। इति।

(१) अत्र ताम्बूलानीत्याश्वलायनपरिशिष्टपाठात् ताम्बूलं पातु इत्येकवचनान्तप्रयोगो न सम्मतः। अत एव सफलानीत्यपि पृथगेव सविभक्तिकं प्रयोज्यम्।

दद्यात् । ऐश्वर्यमस्तु इति इतिव्रा० । दक्षिणाः पान्तु बहुदेयं चास्तु, इति दक्षिणां दद्यात्। [ॐ स्वर्चितमस्तु इति जलं दद्यात् । अस्त्वर्चितमिति व्रा०] ।

"दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशोविद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं चास्तु" इति वाक्येन विप्रान् प्रार्थयेत् इति सम्प्रदायः ।

यजमान जलदेवे और "शिवाआपः सन्तु" इस मन्त्र को कहे। ब्राह्मण "सन्तुशिवाआपः" इस वाक्य को कहें । इसी प्रकार यजमान पुष्प गंध अक्षतादि वाक्यों को पढ़कर वस्तु ब्राह्मणों के हाथ में देवे । ब्राह्मण भी ग्रहण करते समय अपने २ वाक्यों को पढ़ें ।

ततः कर्ता-"यं[1] कृत्वा सर्वदेवयज्ञक्रिया सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभना प्रवर्तन्ते तमह-

(१) क्षत्रियवैश्ययोः पुण्याहवाचने यं कृत्वेत्यादारभ्य आदिं कृत्वेत्यन्तं न पठनीयम् ।
यमः—"पुण्याहवाचनं सर्वं ब्राह्मणस्य विधीयते । तदेव निरोङ्कारं कुर्यात्क्षत्रियवैश्ययोः ॥
अथवा तमहमोकारमादिं कृत्वेति पठनीयम् । आदिं कृत्वा आदि कृत्वेत्यर्थः ।
स्त्रीणां ब्राह्मणद्वारा पुण्याहवाचनम् । शूद्रे तु केवलं स्वस्तिप्रयोगो न पुण्याहादि
तस्य तावतैव पुण्याहवाचनसिद्धेः ।

मोङ्कारमादिं कृत्वा ऋग्यजुः सामा (थर्वा) शीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः 'पुण्यं' पुण्याहं वाचयिष्ये" इतिवदेत् ।

यजमान हाथ जोड़कर उपरोक्त वाक्य को पढ़कर ब्राह्मणों से प्रार्थना करे ।

"वाच्यताम्" इति विप्राः ।

यजमान प्रार्थना के अन्त में ब्राह्मण लोग "वाच्यताम्" इस वाक्य को कहें ।

ततः कर्ता:—

ॐ द्रविणोदाः[2] पिपीषती जुहोतप्र चं तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ १ ॥ ॐ सवितात्वा सवानां सुवतामग्निर्गृहपतीनां सोमो वनस्पतीनाम् । बृहस्पतिर्वाचऽइन्द्रोज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो

(१) संविज्ञातमिति दानखण्डे ।

(२) ऋग्वेदे—ॐ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्रयंसत् । द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥१॥ सविता पश्चात् सविता पुरस्तात् सवितोत्तरात्तात् सविताऽधरात्तात् । सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥२॥ नवो नवो भवति जायमानोऽन्हां केतु रुरुष सामेत्यग्रम् । भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायुः ॥३॥ ॐ उच्चादिवि दक्षिणावन्तोऽअस्थुर्येऽअश्वदाः सह ते सूर्येण । हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्त आयुः ॥ ४ ॥

ष्वरुणो धर्म्मपतीनाम् ॥ २ ॥ नतद्रक्षांसिनपिशाचास्तरन्ति देवानामोजः प्रथमजंह्येतत् । योबिभर्त्ति दाक्षायणंहिरण्यंस देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥ ३ ॥

सामवेदे । ॐ देवोऽवो ३ द्रविणोदाः पूर्णां विवष्ट्वासिचम् । ऊर्ध्वा १ सिञ्चा २ । ध्वमुपवापृणध्वम् । आदिद्धोदे २ । व ऊहते इडा २ ३, भा ३ ४ ३, ऊ २, ३, ४, ५, इ । डा ॥ १ ॥

अद्य नो देव सवितः । ओ हो वा । इह श्रुधायि । प्रजावा २, ३, त्सा । वीः सौभगाम् । परादू २,३, ष्वा ३ । हो वा ३ हा । प्रिय सु २।३,४,५ वा, ६, ५,६ दक्षा ३ या २, ३।४।५ ॥२॥

चन्द्रमाआहुवा सुवान्ता रा ३ वा सुपर्णोधाउवा । वतेदिवि । नवोहि राउवा । ण्यनायिमा याउवा । पदं विन्दाउवा । तिविद्युताः । वित्तं मा आ उ वा । स्यरोदा २।३ सा ३, ४, ३, यिउ, २।३।४३३। इडा ॥ ३ ॥

उच्चाता ३ यि जातमन्धसाः । दिवा इसा १ दूभू २ मिया २. ३. ददाइ । उ ग्रँ शर्मा महा २. ३ यि श्रवाउ । वा ३ । स्तौषे २.३ ।४।६।५ ॥ ४ ॥

उ पा ५ स्मै । गा ३ या ३ तानाराः । पा ३ वामा ३ ना । या २.३ आ । हुम्मायि । दा ३ वायि । अभि देवाँ इया २ । क्षताउ । वा । ३.४.५ ॥ ५ ॥

( अथर्ववेदे ) ॐ धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नोऽ अग्निः । त्वष्टा विष्णुः प्रजया संरराणो यजमानाय द्रविणं दधातु ॥ १ ॥

ॐ अभयं द्यावा पृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु । अभयं नो स्तूर्वां-१न्तरिक्षं सप्तऋषीणां च हविषाऽभयं नोऽ अस्तु ॥ २ ॥

ॐ उच्चा ते जातमन्धसो दिवि सद्भूम्याददे। उग्रꣳ शर्म्म महि श्रवः॥ ॐ उपास्मै गायता नरः पवमानायेन्दवे। अभि देवाँ इयक्षते। ( इति मन्त्रानुक्त्वा )

"व्रत[1]जप[2]नियम[3]तपः[4]स्वाध्यायक्रतुशम[5]दम[6]दया[7]दान[8]विशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्" [ इति विप्रान्प्रार्थयेत् ]। "समाहितमनसः स्मः" ( इति विप्राः )।

---

नवो नवो भवसि जायमानोऽह्नां केतुरुषसामेष्यग्रम्। भागं देवेभ्यो विदधास्यायन्प्रचन्द्रमस्तिरसे दीर्घमायुः॥ ३॥
उच्चैर्घोषो दुन्दुभिः सत्वनायन् वानस्पत्यः सम्भृत उस्रियाभिः। वाचं क्षुण्वानो दमयन्त्सपत्नान् सिंह इव ज्येष्यन्नभितं स्तनीहि ॥४॥

१ व्रतम्—"गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः। प्रवर्तनं हितानां च तत्सर्वं व्रतमुच्यते।

२ जपः—तत् जपर्थतदर्थभावनम्।

३ नियमाः—तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्। सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम्। दशैते नियमाः प्रोक्ता मुनिभिस्तत्वदर्शिभिः"

४ तपः—शरीरसन्तापकरं कृच्छ्र चान्द्रायणादिकम्। मनसश्चेन्द्रियाणां च एकाग्र्यं तप उच्यते।"

५ शमः—अन्तःकरणस्य क्रोधादिराहित्यं शमः।

६ दमः—"वाक् चक्षुरिन्द्रियाणां बाह्यानां निषिद्धेभ्यो विषयेभ्यो निवृत्तिर्दमः" ( तै० आ० भा० १०।६२ )

७ दया—"परे वा बन्धवर्गे वा मित्रेद्वेष्टरि वा यदा। आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता।"

८ दान—गोभूहिरण्यादीनां स्वकीयानां शास्त्रोक्तवर्त्मना स्वस्वत्वपरित्यागपूर्वकं परस्वत्वोत्पादनं दानम्।

सव वेदाः प्रीयन्ताम्, ॐ विष्णुपुरोगाः सर्वे वेदाः प्रीयन्ताम् ॐ ऋषकश्छन्दांस्याचार्या वेदा देवा यज्ञाश्च प्रीयन्ताम्, ॐ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्,

यजमान हाथ में अक्षतादि पुष्प पुष्प लेकर ऊपर लिखे मन्त्रों को पढ़कर जलादिक गिरावे।

ॐ अम्बिकासरस्वत्यौ प्रीयेताम्, ॐ श्रद्धामेधे प्रीयेताम्, ॐ भगवती कात्यायनी प्रीयताम्, ॐ भगवती माहेश्वरी प्रीयताम्, ॐ भगवती ऋद्धिकरी प्रीयताम्, ॐ भगवती वृद्धिकरी प्रीयताम्, ॐ भगवती पुष्टिकरी प्रीयताम्, ॐ भगवती तुष्टिकरी प्रीयताम्, ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम्, ॐ सर्वाः कुलदेवताः प्रीयन्ताम्, ॐ सर्वाः ग्रामदेवताः प्रीयन्ताम्, ॐ सर्वाः इष्टदेवताः प्रीयन्ताम् ॥

इन उपरोक्त मन्त्रों को पढ़ता हुआ पहिले की तरह फिर भी प्रथम पात्र में कलश का जल गिरावे।

ततो बहिः पात्रान्तरे उत्तरतो निहिते जलपातनमक्षतप्रक्षेपणं वा द्वितीयपात्रे पातयेत्।

ॐ हताश्च ब्रह्मद्विषः, ॐ हताश्च परिपन्थिनः, ॐ हताश्च विघ्नकर्त्तारः, ॐ शत्रवः पराभवं यान्तु, ॐ शाम्यन्तु घोराणि, ॐ शाम्यन्तु पापानि, ॐ शाम्यन्त्वीतयः, ॐ शाम्यन्तुपद्रवाः,

फिर दूसरे पात्र में जल गिरावे और इस उपरोक्त मन्त्र को पढ़े।

( ततोऽन्ते पूर्वपात्रे पातयेत् ) । ॐ शुभानि वर्धन्ताम्, ॐ शिवा आपः सन्तु, ॐ शिवा ऋतवः सन्तु, ॐ शिवा ओषधयः सन्तु, ॐ शिवा वनस्पतयः सन्तु, ॐ शिवा अतिथयः सन्तु, ॐ शिवा अग्नयः सन्तु, ॐ शिवा आहुतयः सन्तु, ॐ अहोरात्रे शिवे स्याताम्, ॐ निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽ ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ (शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसामसहिता) आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्, ॐ भगवान् नारायणः प्रीयताम्, ॐ भगवान्

---

( १ ) ऋग्वेदे—शंवः कनिक्रदद्देवः पर्जन्यो अभिवर्षत्वोषधयः प्रति धीयताम्। शन्नो द्यावापृथिवी शं प्रजाभ्यः शं नो अस्तु द्विपदे शं चतुष्पदे ॥ १ ॥
सामवेदे—त्वष्टा ३,४ नो दैवियम् । वचाः । पर्जन्यो ब्रह्मणस्पा २, ३, तीः । पुत्रै र्भ्रातृभिरदिति नूपातु २, ३, नाः । दुष्टारा २३० न्त्रा । मेणं वा २, ३, । चा ३, ४, ३ । ऊ २, ३, ४, ५, इ । डा ॥ १ ॥
अथर्ववेदे-त्वष्टा मे दैव्यं वचः पर्यन्यो ब्रह्मणस्पतिः । पुत्रैर्भ्रातृभिरदिति नु पातु नो दुष्टरं त्रायमाणं सह ॥ १ ॥

( २ ) 'भूपिण्डे मध्यभागस्थिताद्रवेरूर्ध्वं शुक्रसौम्यसतमोविधूनामधश्च कुजगुरुमन्दानामवस्थितत्वादूर्ध्वाधः क्रमेण विनाद्यन्तमेकैकग्रहग्रहणात् आनन्तर्यन्यायेन लाघवाच्छनिसतमोविधुग्रहणात् आनन्तर्यन्यायेन लाघवाच्छनिसतमोविधुग्रहणात् शुक्राङ्गारेति साधीयान् । एतत् सर्वं सिद्धान्तशिरोमणौ स्पष्टम्' ।

पर्जन्यः प्रीयताम्, ॐ भगवान् स्वामी महासेनः प्रीयताम्, ॐ पुरोनुवाक्यया यत्पुण्यं तदस्तु, ॐ याज्यया यत्पुण्यं तदस्तु, ॐ वषट्कारेण यत्पुण्यं तदस्तु, ॐ प्रातः सूर्योदये यत्पुण्यं तदस्तु, ततः कर्ता "एतत्कल्याणयुक्तं (पुण्यं) पुण्याहं वाचयिष्ये। इति वदेत् यजमानः।

ऊपर लिखे हुवे वाक्यों को पढ़े।

"वाच्यतामिति विप्राः।

"वाच्यताम्" इस वाक्य को ब्राह्मण कहें।

यजमानो ब्रूयात्—ॐ ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम्। वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः॥

इस ऊपर लिखे मन्त्र को कहे—

यजमानो ब्रूयात्—भो ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणकर्मणः पुण्याहं



(१) भो ब्राह्मणाः ? "इदं वाक्यं क्रमेण मन्द्रमध्यमोच्चस्वरेण त्रिकर्त्ता वक्तव्यम्। विप्रैश्च पुण्यादादि शब्दस्तथैव वक्तव्याः" इति रुद्रकल्पद्रुमे। तद्वत्कल्याणमृद्धिं च स्वस्ति त्रिस्त्रिः पृथक् पृथक्।
प्रहास्य यजमानस्य गृहे पुण्याहमृत्विजः। भवन्तोऽत्र ब्रुवन्त्वेवं त्रिः पुण्याहं ब्रुवन्ति ते॥

भवन्तो ब्रुवन्तु इति क्रमेण मन्द्रमध्यमोत्तमस्वरेण त्रिः ब्रूयात् ।

यजमान कह दे कि हे ब्राह्मणों मेरे परिवार वाले गृह में आप लोग पुण्याहवाचन को कहैं ।

ब्राह्मणाः—"ॐ पुण्याहम्" इति त्रिर्ब्रूयुः । पुनेरप्यवम् । (यजमानः)

ब्राह्मण लोग "ॐ पुण्याहम्" ऐसा तीन बार कहे—और मन्त्र पढ़ें ।

पुनन्तु मा देवजनाः पुनन्तु मनसा धियं÷ । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मां ॥

(१) ऋग्वेदे-उद्गातेव शकुने सामगायसि ब्रह्मपुत्र इव सवनेषु शंससि । वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुनेभद्रमवाद वि-श्वतो नः शकुनेपुण्यमावद ॥ १ ॥

सामवेदे—पुनानः सोमा ३ धारा २. ३. ४, या. । आपो वसानो अर्पस्यारत्नधायो निमृतस्य सा २ यदि सायि । ऊँहा ३ उवा । त्सो-देवोहिरा २. ३ हायि । ऊँहा ३ उवा । ण्यया ऊँ ३ हो वा हो । ५. इ । डा ॥ १ ॥

अथर्ववेदे—पुनन्तु मा देवजनाः पुनन्तु मनवोधिया । पुनन्तु विश्वाभूतानि पवमानः पुनातुं मा ॥ १ ॥

दीयन्ते यत्र दानानि पूज्यन्ते च द्विजातयः । दृश्यते यत्र माङ्गल्यं तत् पुण्याहं सदा ऽस्तु मे ॥

ॐ पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुरा कृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत् कल्याणं ब्रुवन्तु नः ॥ इति कर्त्ता त्रिर्वदेत् ।

कर्ता इस ऊपर लिखे को कहें ।

यजमानः—भो ब्राह्मणाः ! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणकर्मणः कल्याणं भवन्तो ब्रुवन्तु ।

हे ब्राह्मणों ! परिवार सहित मेरे गृह में आप लोग कल्याण को कहें ।

ॐकल्याणमिति त्रिर्विप्राः ३ ॥

यथेमां व्वाचं कल्याणीमावदानिजनेभ्यः । ब्रह्मराजन्याभ्या ँ शूद्राय चार्याय च स्वायचारणाय

(१) ऋग्वेदे—अपाः सोमस्वमिन्द्र प्रयाहि कल्याणीर्जाया सुरणं गृहेते । यत्रारथस्य वृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥१॥

सामवेदे—काया । नश्चा ३ इत्रा ३ आभुवात् । ऊ तीसदावृधः स ॥ ख ऊ । ॐ ३ हो हा ई । कया २३ शचा इ । ष्ठयौ हो ३ । हुम्मा २ । वा २ र्तो ३. ५ हाई ॥ १ ॥

अथर्ववेदे—विश्वजित्कल्याण्यै मा परिधे हि । कल्याणि द्विपाच्च सर्वतो रक्ष चतुष्पाद्यच्च नस्वम् ॥१॥

पुत्रपौत्रकलत्रादि द्विपदाश्च चतुष्पदाः । तिष्ठन्ति यत्र भृत्याद्यास्तत् कल्याणं सदाऽस्तु मे ॥

च । प्रियोदेवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुपमाऽदोनमतु ॥

ब्राह्मण 'ॐ कल्याणम्' इस वाक्य को तीन बार कहे । "यथेमां व्वाचं" इस मन्त्र को कर्ता पढ़ें ।

सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता संपूर्णा सुप्रभावा च तां ऋद्धिं ब्रुवन्तु नः ॥

इस ऊपर लिखे वाक्य को कर्ता पढ़ दें ।

यजमानः—भो ब्राह्मणाः ! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु इति त्रिः कर्ता वदेत् ।

हे ब्राह्मणो परिवार सहित मेरे गृह में आप सर्व ऋद्धि को कह दे ।

ब्राह्मणाः—ॐ ऋध्यतामिति त्रिः ।

ॐ सत्रस्य ऽऋद्धिरस्यगन्म ज्योतिरमृताऽ अभूम । दिवं पृथिव्याऽ अद्ध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥

ब्राह्मण लोग तीन बार "ऋद्ध्यताम्" ऐसा कहे । तब "सत्रस्य ऋद्धि" इस मन्त्र को कर्ता पढ़ें ।

---

( १ ) ऋग्वेदे—ऋध्याम स्तोमं सनुयाम वाजमानो मन्त्रं सरथेहो पयातम् । यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ १ ॥

स्वस्तिस्तु या ऽविनाशाख्या नित्यं मङ्गलदायिनी। विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥

ऊपर लिखे वाक्य को कर्ता पढ़ दे।

भो ब्राह्मणाः ! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणकर्मणे स्वस्ति भवन्तो ब्रुवन्तु।

हे ब्राह्मणों परिवार के सहित मेरे कुटुम्ब गृह में आप लोग आकर स्वस्ति को कहें।

ॐ "आयुष्मते स्वास्ति" इति त्रिर्विप्रा ब्रूयुः।

"आयुष्मते स्वस्ति" वाक्यको तीनवार ब्राह्मण बोले।

---

सामवेदे—ऊ होवा ऊ होवा ऊ हो ३ वा। अगन्म ज्योतिः। अगन्म ज्योतिः। अगन्मज्योतिः। अमृता अभूम। अमृता अभूम। अमृताऽअभूमान्तरिक्षं पृथिव्या अध्यारुहामान्तरिक्षं पृथिव्या अध्यारुहामान्तरिक्षं पृथिव्याअध्यारुहामा। दिवमन्तरित्तादध्यारुहाम।३। अविदाम देवान्।३। समुदेवैरगन्महि।३। ऊ होवा ऊ हो वा ऊ ३ होवा ३ सुवर्ज्योती २।३।४।५॥१॥

अथर्ववेदे--ऋधङ् मन्त्रो योनिं य आ वभूवामृतासु वर्द्धमानः सुजन्मा। अदब्धासुर्भ्राजमानो हेव त्रितोधर्ता दाधार त्रीणि ॥१॥

"धनं धान्यं तथा धर्मो निधिः कोशो गृहाणि च। ध्रुवाणि यत्र तिष्ठन्ति सा ऋद्धिः सर्वदाऽस्तु मे" ॥

(१) "स्वस्तिर्भवतु मे नित्यम्" इतिभविष्ये पुलिङ्गोऽपि यद्यपि स्वस्ति शब्दः तथाप्यत्राव्यय एव पठनीयः—"वक्तारश्च चतुर्थ्यन्तं तत्तन्नामोक्तिपूर्वकम्" स्वस्तीति च प्रतिब्रूयुरथ सर्वेऽपि ते द्विजाः" इति वचनात्।

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

कर्ता ऊपर लिखे मन्त्र का पाठ करे।

## ( दानखण्डे एतावदेव पुण्याहवाचनम् )

---

( १ ) ऋग्वेदे—स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभिया वाममेति। सा नो अमासोऽ अरणे नि पातु स्वावेशा भवतु देव गोपा ॥

सामवेदे—त्रातारमिन्द्रमविता। रमी २-३ न्द्राम्। हवेहवे सुहवा ३ शूरमी २-३ न्द्राम्। हुवाइनु शक्रंपुरुहू। तमी २-३ न्द्राम्। इन्दा स्वस्ति नो मघवा। वा ४-३-३ इतू ३ वा ५ इन्द्रा ६-५-६।

अथर्ववेदे-स्वस्ति मात्र उत पित्रे नो अस्तु स्वस्ति गोभ्यो जगते पुरुषेभ्यः। विश्वं सुभूतं सुविदत्रं नोऽस्तु ज्योगेव दृशेमसूर्यम् ॥

दीर्घायुत्व च यत्रास्ति माङ्गल्यं यत्र तिष्ठति। दीप्तिर्लक्ष्मीश्च तत्स्वस्ति सर्वदाऽस्तु गृहे तव ॥

( २ ) संप्रदायमनुसृत्य मृकण्डसूनोरित्यादिकमपि लिख्यते। अत्र "पुण्यं कल्याणमृद्धिं च स्वस्ति श्रीरिति पञ्चकम्" इति संस्कारभास्करवचनात् भो ब्राह्मणा अस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु। ॐ अस्तु श्रीः ॐ मनसः कामम० इति श्रीवाचनमिच्छन्ति। प्रायोऽयं दाक्षिणात्यसम्प्रदायः।

तत्वं तु परिशिष्टोक्त स्वस्त्यन्तपुण्याहवाचनपक्षे श्रीवाचनमपि पृथगिच्छयाकार्यम्। मृकण्डसूनोरिति पक्षाश्रयणे तु न पृथक् श्रीवाचनं, शिवगौरीविवाहेयेत्यनेनैव गतार्थत्वादिति।

ॐ समुद्रमथनाज्जाता जगदानन्दकारिका हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥

इस ऊपर लिखे वाक्य को पढ़ें।

भो ब्राह्मणाः ! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणकर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु ।

हे ब्राह्मणों ! कुटुम्ब और परिवार के सति मेरे गृह में 'श्रीरस्तु' ऐसा आप लोग कहें।

ॐ अस्तु श्रीः ३ ।

ॐ श्रीश्चं ते लक्ष्मीश्च पत्न्यां वहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मं-ऽइषाण सर्व्वल्लोकम्मंऽ इषाण ॥

ब्राह्मण तीन वार अस्तु श्रीः ३ ऐसा कहे तव कर्ता मन्त्र को पढ़ देवें।

ॐ मृकण्डसूनोरायुर्यद् ध्रुवलोमशयोस्तथा । आयुषा तेन संयुक्ता जीवेमः शरदः शतम् ॥

ॐ शतं जीवन्तु भवन्तः ( इति विप्राः ) ।

लिखे वाक्य को कर्ता पढ़ें। और ब्राह्मण "शतं जीवन्तु भवन्तः" ऐसा कहे।

ॐ शतमिन्नु शरदोऽअन्ति देवा यत्रां नश्चक्राजरसन्तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मानो मध्यारीरिषता युर्गन्तोः ॥

ॐ शिव गौरी विवाहे या या श्रीरामे नृपात्मजे । धनदस्य गृहे या श्रीरस्माकं साऽस्तु सद्मनि॥
ॐ अस्तु श्रीः ! ( इति विप्राः ) ॥

मन्त्र और श्लोक का पाठ कर्ता करे । 'ॐ अस्तु श्रीः' इस वाक्य को ब्राह्मण लोग कह दे ।

---

( १ ) ऋग्वेदे—शतं जीव शरदो वर्द्धमानः शतं हेमन्ताच्छतमु वसन्ताऽन् । शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः
सामवेदे—हाउ हाउ हाउ । यशो हाउ ३ । वर्चो हाउ । ३ । आस्मिन् हायि २ आस्मिन् हाइ ३ वा २। तवेदिन्द्रा वमं वसु । त्वं पुष्यसि मध्यमम् । सत्रा विश्वस्य परमस्य राजसि । न किष्या गोषु वृण्वते । हाउ हाउ हाउ । यशो हाउ ३ । वर्चो हाउ ३ । आस्मिन् हायि । आस्मिन् हायि ३. १. उ । वा २ । आयुर्विश्वायुर्विश्वं विश्वमायुरशी महि । प्रजां त्वष्टरधिनिधे ह्यस्मे शतं जीवेम शरदो वयन्ते २–३–४–५ ॥
अथर्ववेदे—आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधि निधे ह्यस्मै । रायस्पोषं सवितरा सुवास्मै शतं जीवाति शरदस्तवायम् ॥

ॐ मन॑सः॒ काम॒ माकूतिं॑ व्वा॒चः सत्यम॑शीय। प्रशूना॑ᳬ रूपमन्नस्य रसो॒ यशः॒ श्रीः श्र॑यतां मयि॒ स्वाहा॑ ॥

ॐ प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट्। भगवाञ्छाश्वतो नित्यं स नो रक्षतु सर्वतः ॥

ॐ भगवान् प्रजापतिः प्रीयेताम्[2] इत्युक्त्वा ( पात्रे जलं क्षिपेत् )।

मन्त्र और श्लोक पढ़ कर कर्ता 'ॐ भगवान् प्रजाप०' इससे जल को गिरा दे।

---

( १ ) ऋग्वेदे–श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति। श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ॥

सामवेदे-आयन्त इवस् ४ रायां विश्वा २ ईदिन्दा २ स्यभा २ क्षता वासूनिजातो जनिमानि यो जासा २। प्रतिभागं नदी २ धिमः। प्रा २–३ ती। भागां ना ३ दाहुँ। घीमा ३ः। ओ २–३–४ वाश्रिये १–५।

अथर्ववेदे–-एह यातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेह यातु। अस्यश्रियमुप संयातु सर्व उग्रस्य चेत्तुः समनस सजाताः।

( २ ) प्रीयताम्—बौधायनोक्ततत्तत्कर्मदेवतानामप्रथमया विभक्त्या सङ्कीर्त्य प्रीयतां प्रीयेतां प्रीयन्तामिति दैवतैकत्वाद्यनुसारेणोक्त्वापात्रे जलं क्षिपेत् न तु कलशोपरीति ध्येयम्। इदं पुण्याहवाचनान्ते युक्तम्। ॥२७॥

ॐ प्रजापते नत्व देतान्यन्यो विश्वा रूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य पिता सावस्य पिताऽव्वयᳬस्यां म पतंयोरयीणां स्वाहा ॥

( यजमानः ) ॐ आयुष्मते स्वस्तिमते यजमानाय दाशुषे। श्रिये ( रत्ना[2]शिषः ) दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः ॥

(देवेन्द्र[3]स्य यथा स्वस्ति यथा स्वस्ति गुरोर्गृहे । एक लिङ्गे यथा स्वस्ति तथा स्वस्ति सदा मम)

---

( १ ) अनादेशे देवता सन्देहे प्रजापतिर्देवता।

ऋग्वेदे—प्रजापतेन० विश्वा जातानि परिता वभूव । यत्कामास्ते जुहूमसन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥१॥

सामवेदे—हाऊ ।३। इमाः प्रजाः ।३। प्रजापते होई ।२। प्रजापते । हा ३-१ ऊ३ वा ।२। ए । हृदयम् ।२। ए । हृदया ३१ ३ । वा २ । प्रजारूप मर्जीजने ३ । इ‍ट्इडा-२३४५ ॥ २ ॥

अथर्ववेदे—प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपश्य ज्योतिषा वर्चसा च ॥ जरदृष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम् ॥ ३ ॥

( २ ) रत्ना रमणीया आशिषा इत्यर्थः । दत्ताशिष इति क्वाचित्कः पाठः ।

( ३ ) देवेन्द्रस्येति श्लोकः प्राचीनपुस्तकेषु नास्ति ।

ॐ "आयुष्मते स्वस्ति" ( इति विप्राः )

कर्ता मन्त्र और श्लोक पढ़े। और ब्राह्मण लोग "आयुष्मते स्वस्ति" इस वाक्य को पढ़े।

प्रतिपन्थामपद्महि स्वस्तिगामनेहसम् । येन विश्वाः परिद्विषो वृणक्ति विन्दते वसु ॥८॥

ॐ "स्वस्तिवाचनसमृद्धिरस्तु" ।

मन्त्र पाठ कर 'स्वस्तिवा०' एसा ब्रा० कहें।

कृतैतत्[2] दानखण्डोक्तपुण्याहवाचनकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च पुण्याहवा-

---

( १ ) ऋग्वेदे—स्वस्तये वाजिभिश्च प्रणेतः संयन्महीरिषः आसत्सि पूर्वीः । रायो वन्तारो वृहतः स्यामास्मेऽ अस्तु भग इन्द्र प्रजावान् ॥८॥

सामवेदे—ई य इया ३ हायित्यमषु वाजिना ३ न्दे ३ वजूत मई ३ यईया । हा ३४ यि सहोवानन्ता । रूता ३ । राँ रथानां । य इ या इ हाई । अरिष्टा ३ नावि मि ३ स्पृत । नाजमाशुम् । ई ४ य इ या । हा २३४५ यि स्वस्त । यायिताक्ष्र्यमिहा ३. ४३ । हू ३ वा ५ यिमा ५६५ ॥ ८ ॥

अथर्ववेदे—त्यमूषु वाजिनं देवजूतं सहोवां तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये ताक्ष्यमिहा हुवेम ॥

( २ ) ( इदं दक्षिणादानमभिषेकान्ते युक्तमभिषेकस्य पुण्याहवाचनान्तर्भूतत्वात् )

"पुण्याहान्ते ऽर्चयेद्विद्वान् दक्षिणाभिः स्वशक्तितः" इति ॥

चकेभ्यो ब्राह्मणेभ्यो मनसोदिष्टां दक्षिणां विभज्य दातुमहमुत्सृज्ये ।

दानखण्डोक्त पुण्याहवाचन कर्मसाङ्गता सिद्ध्यर्थं तत्सम्पूर्ण फलप्राप्त्यर्थं पुण्याहवाचक ब्राह्मणों को मनसोदिष्ट दक्षिणा का विभाग कर देवे ।

ततः कर्त्ता अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्ट ब्राह्मणानां वचनात् श्री-महागणपति प्रसादाच्च परिपूर्णोऽस्तु । इति वदेत् समाचारात् । ॐ अस्तु परिपूर्ण इति द्विजाः ।

उसके बाद कर्ता इस पुण्याहवाचन में न्यूनातिरिक्त जो विधि वह उपविष्ट ब्राह्मणों के वचन से और महागणपति के प्रसाद से परिपूर्ण हो । "ॐ अस्तु परिपूर्णः" इस वाक्य को द्विज कह देवे ।

## स्वस्तिवाचनाङ्गभूत अभिषेक[1]प्रयोगः—

ततोऽविधुरा[2] ब्राह्मणाः[3] कर्तुर्वामतः[4] पत्नी ( तत्सहचरितपुत्रादिकमपि[5] )·मुपवेश्य एकस्मिन् पात्रे[6]

( १ ) शान्तिकेषु पौष्टिकेषु च कर्मसु तदन्ते, शान्त्यर्थं स्नाने, राजाभिषेकादौ च शिरसि विधिना मन्त्रैर्जलसेचनमभिषेकः ॥ ( का० श्रौ० १६ )

( २ ) "विधुरोमृत भार्यो भार्यान्तरोपादानासमर्थश्च" तद्भिन्ना अविधुराः । ( बौ० ध० भा० २।१०।१७४। )

( ३ ) विप्रा उपविश्य वाचयितारमभिषिञ्चेयुरिति बौधायनः ।

( ४ ) आशीर्वादेऽभिषेके च पादप्रक्षालने तथा । शयने भोजने चैव पत्नीरुत्तरतो भवेत् ॥

कलशोदकं पात्रान्तरे प्रक्षिप्तं च जलं गृहीत्वा पल्लवदूर्वासहितेन तेन जलेन उदङ्मुखप्रत्यङ्मुखास्तिष्ठन्त

संस्कारगणपतौ—
वामे सिन्दूर दाने च वामे चैव द्विरागमे । वामेऽशनैकशय्यायां भवेज्जाया प्रियार्थिनी ॥
सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः शुभा । अभिषेके विप्रपादक्षालने चैव वामतः ॥
वामे पत्नी त्रिषु स्थाने पितृणां पादशौचने । रथा रोहणकाले च ऋतुकाले सदा भवेत् ॥" इति ॥

(५) "ततो वाचयिता कुम्भजलं संस्कार्यमूर्द्धनि । किञ्चित्सिञ्चेत्तथैवान्ये ब्रूयुश्च विधाशिषः" । इति ।

(६) अभिषेकपात्रम्—

वीरमित्रोदये—"अरत्निमात्रविस्तारं मध्येऽष्टदलसंयुतम् । प्रतिपद्मदलं मध्ये सुषिराणि शतं भवेत् ।
अष्टोत्तरशते भूयः पर्यन्तदलमध्यतः । खचितं च महारत्नैरेवंधारा सहस्रकम् ॥
अयमर्थः—
अरत्निमात्रविस्तीर्णं पात्रं कुर्यात्तन्मध्येऽष्टदलं कार्यम् । तदेकैकदले शतं सुषिराणि एवमष्टदले सुषिराणामष्टशती संजायते । भूयः अष्टोत्तरशते सम्पादितसुषिराष्टशत्युत्तरशते उपरितनं शतद्वयं छिद्राणामष्टसु पर्यन्तदलेषु पञ्चविंशति शङ्ख्यया कार्यम् । एवं सहस्रसुषिरैः रत्नखचितैर्धारा सहस्राष्टकं भवति ।
धाराष्टकेन वा युक्तमभिषेकाय कल्पयेत् । आढका परिणाम्भः पूरयोग्यं महाबिलम् ।

(१) इमे अभिषेकमन्त्राः रुद्रकल्पद्रुमे ।

उपविष्टा वा यजमानं सकुटुम्बं अभिषिञ्चेयुः वक्ष्यमाण मन्त्रैः । तद्यथा—

उसके बाद कर्ता के वाम पत्नी को बैठाकर दूर्वापल्लादियुत पात्र में जल गिराकर सकुटुम्ब के सहित कर्ता को अभिषेक करैं ।

---

( १ ) अथाभिषेकः—स च वर्सोद्धारान्ते आदौ स्थापितदेवानामुत्तरपूजां कृत्वा तदनन्तरमुक्तः सर्वेषु निबन्धग्रन्थेषु । रुद्रकल्पद्रुमे दक्षिणादानोत्तरमुक्तः । तेन अभिषेके पक्षद्वयं वसोर्द्धारान्ते स्थापितदेवोत्तरपूजोत्तरं दक्षिणादानोत्तरं वा । अद्यत्वे तु दानोत्तरमेव क्रियते । युक्ततमं तु वसोर्द्धारान्ते उत्तरपूजोत्तरमेव । निबन्धेसु तथैवोपलम्भात् । रुद्रयागादौ तु दानोत्तरकरणमपि सङ्गतमिति ।

उत्तर पूजाऽपि—वसोर्द्धारान्ते निबन्धेषु विहिता । स्विष्टकृद्धोमात्पूर्वमिति-आधुनिकयाजुससम्प्रदायः । यजमानाभिषेकान्ते उत्तरपूजा इति रुद्रकल्पद्रुमे ।

एवं दक्षिणादानमपि अभिषेकानन्तरं भाति निबन्धग्रन्थेषु चोक्तम् । रुद्रकल्पद्रुमे दक्षिणादानोत्तरमभिषेक इत्यपि पक्षोऽस्ति ।

श्लोकाः—गणाधिपो भानु शशी धरासुतो बुधोगुरुर्भार्गव सूर्य्यनन्दनाः । राहुश्च केतुश्च परं नवग्रहाः कुर्वन्तु वः पूर्ण मनोरथं सदा ॥१॥
उपेन्दु इन्द्रो वरुणो हुताशनस्ति विक्रमो देवगणश्चतुर्भुजः । गन्धर्व यक्षोरगसिद्धचारणाः कुर्वन्तु वः पूर्णमनोरथं सदा ॥ २ ॥
नलो दधीचिः सगरः पुरुरवाः शाकुन्तलेयो भरतो धनञ्जयः । रामत्रयं वैन्यबली युधिष्ठिरः कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ३ ॥

मनुर्मरीचिर्भृगुदक्षनारदाः पराशरो व्यास वशिष्ठ भार्गवाः । वाल्मीकि कुम्भोद्भवगर्ग गौतमाः कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ४ ॥
रम्भा शची सत्यवती च देवकी गौरी च लक्ष्मीरदितिश्चरुक्मिणी । कूर्मो गजेन्द्रस्सचराचरा धरा कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ५ ॥
गङ्गा च क्षिप्रा यमुना सरस्वती गोदावरी वेत्रवती च नर्मदा । सा चन्द्रभागा वरुणा त्वसी नदी कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ६ ॥
तुङ्गप्रभासो गुरुचक्र पुष्करं गया विमुक्ता वदरी वटेश्वरः । केदारपम्पा सरसी च नैमिषं कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ७ ॥
शङ्खश्च दूर्वासित पत्रचामरं मणिः प्रदीपो वर रत्नकाञ्चनम् । सम्पूर्णकुम्भः स हुतो हुताशनः कुर्वन्तु वः पूर्णमनोरथं सदा ॥ ८ ॥
प्रयाणकाले यदि वा सुमङ्गले प्रभातकाले च नृपाभिषेचने । धर्मार्थकामाय जयाय भाषितं व्यासेन कुर्यात्तु मनोरथं सदा ॥९॥ इति ।

श्लो०—सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णु महेश्वराः । वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभु ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २ ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु त्वां सदा ॥ ३ ॥
कीर्तिर्लक्ष्मीधृतिर्मेधा पुष्टिः श्रद्धा क्रियामतिः । बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिस्तु मातरः ॥ ४ ॥
एतास्त्वा मभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यचन्द्रमाभौमबुधजीव सितार्कजाः ॥ ५ ॥
ग्रहास्त्वा मभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । देवदानवगन्धर्वाः यक्षराक्षसपन्नगाः ॥ ६ ॥
ऋषयो मनवो गावो देवमातर एव च । देवपत्न्योद्रुमा नागाः दैत्याश्चाप्सरसां गणाः ॥ ७ ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥
सरितः सागराः सर्वे तीर्थानि जलदा नदाः । एतेत्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥ ९ ॥ इति ।

ॐ देवस्यंत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रियै दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ १ ॥ ॐ देवस्यंत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तु यन्त्रेणाग्नेः साम्राज्ज्येनाभिषिञ्चामि ॥२॥ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यांपूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्ज्येन तेजसे ब्रह्मवर्च्चसायाभिषिञ्चामि सरस्वत्यै भैषज्ज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलायश्रियैयशसेऽभिषिञ्चामि ॥३॥ ॐ आपो हिष्ठा मयो भुवस्तानऽऊर्ज्जे दधातन । महेरणाय चक्षसे ॥ ४ ॥ योवः शिवतमो रसस्तस्य भाजयतेहनः । उशतीरिव मातरः ॥५॥ तस्माऽअरङ्ग मामवो यस्य क्षयाय जिन्वथ । आपो जनयथा चनः ॥६॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवे हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनो मघवा धात्विन्द्रः ॥ ७ ॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भ सर्ज्जनीस्थो वरुणस्य ऽऋत सदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद ॥ ८ ॥ ॐ भगप्रणेतर्भगसत्य राधो भगेमान्धियमुदवाददन्नः । भगप्रनो जनय गोभिरश्वैर्भगप्रनृभिर्नृवन्तः स्याम ॥९॥

ॐ इदमापः प्रवहतावद्यञ्च मलञ्च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् । आपोमातस्मादेनसः
 पवमानश्च मुञ्चतु ॥ १० ॥ ॐ समुद्रस्यत्वावकयाग्ने परिव्ययामसि । पावकोऽअस्मभ्यंशिवोभव
॥ ११ ॥ ॐ पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पिता महाः पुनन्तु प्रपिता महाः पवित्रेण शता
युषा ॥ पुनन्तु मापितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेण शतायुषा विश्वं मायुर्व्यश्नवै ॥ १२ ॥
अग्नऽआयूंषिपवसऽआसुवोर्ज्जमिषञ्चनः । आरे बाधस्वदुच्छुनाम् ॥ १३ ॥ पुनन्तु मा देवजनाः
पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ १४ ॥ पवित्रेण पुनीहि मा
शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूँ १ रनु ॥१५॥ यत्ते पवित्र मर्चिष्यग्ने विततमन्तरा । ब्रह्मतेन
पुनातु मा ॥ १६ ॥ पवमानः सोऽअद्यनः पवित्रेण विचर्षणिः । यः पोता सपुनातु मा ॥ १७ ॥
उभाभ्यान्देव सवितः पवित्रेण सवेन च । माम्पुनीहि विश्वतः ॥ १८ ॥ वैश्वदेवी पुनती देव्या-
गाद्यस्यां मिमाबह्व्यस्तन्वोवीतपृष्ठाः । तयामदन्तः सधमादेषु वयं स्याम पतयो रयीणाम् ॥१९॥
ॐ आप्यायस्व समेतुते विश्वतः सोमवृष्ण्यम् । भवावाजस्य सङ्गथे ॥२०॥ 

ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः । सरस्वती तु पञ्चधासो देशे भवत्सरित् ॥ २१ ॥
कौसिकतमोसि कस्मैत्वा कायत्वा । सुश्लोकसुमङ्गल सत्यराजन् ॥ ॐ शिरो मे श्रीर्यशो मुखन्त्विषिः
केशांश्चश्मश्रूणि । राजा मेप्राणोऽअमृतंसम्म्राट्चक्षुर्विराट्श्रोत्रम् ॥ २२ ॥ जिह्वामे भद्रंवाङ्महो
मनो मन्न्युः स्वराड्भामः । मोदाः प्रमोदाऽअङ्गुली रङ्गानि मित्रम्मे सहः ॥ २३ ॥ बाहू मे बलमि-
न्द्रियः हस्तौ मे कर्म्मंव्वीर्यम् । आत्मा क्षत्र मुरो मम ॥ २४ ॥ पृष्ठीर्म्मे राष्ट्रमुदरम ः सौग्रीवाश्च-
श्रोणी । ऊरूऽअरत्नकी जानुनी व्विशो मेङ्गानि सर्व्वतः ॥ २५ ॥ नाभिर्म्मे चित्तं व्विज्ञानम्पा-
युर्म्मे पचितिर्भसत् । आनन्दनन्दा वाण्डौ मे भगः सौभाग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मि-
व्विशिराजाप्रतिष्ठितः ॥ २६ ॥ प्प्रतिक्षत्रे प्प्रतितिष्ठामि राष्ट्रे प्प्रत्यश्श्वेषु प्प्रति तिष्ठामिगोषु । प्रत्यङ्गेषु
प्प्रति तिष्ठाम्यात्मन्प्रति प्प्राणेषु प्प्रति तिष्ठामि पुष्टे प्प्रतिद्यावा पृथिव्योः प्प्रति तिष्ठामि यज्ञे ॥ २७ ॥
त्रया देवाऽएकादश त्रयस्त्रिःशाः सुराधसः । बृहस्पति पुरोहिता देवस्य सवितुः सवे । देवा देवैरवन्तुमा
॥ २८ ॥ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यंयज्ञेन यज्ञोयजुर्भिर्यजूंषि सामभिः

सामान्नृ ग्गिभर्ऋचं÷पुरोनुवाक्याभिः पुरोनुवाक्यायाज्याभिर्याज्या व्वषट्कारैर्व्वषट्काराऽआहुतिभिराहुतयो
मेकामान्त्समर्द्धयन्तु भूः स्वाहा ॥ २९ ॥ ॐ पयं÷पृथिव्याम्पयऽओषधीषुपयो दिव्यन्तरिक्षे
पयोधाः । पयस्वतीः प्रदिशं÷सन्तुमह्यम् ॥ ३० ॥ व्विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रन्तन्नऽआसुव ॥ ३१ ॥ धामच्छदग्निरिन्द्रोब्रह्मा देवो बृहस्पतिं÷ । सचेतसो व्विश्वे देवा यज्ञं
प्रावन्तुनः शुभे ॥ ३२ ॥ त्वंय्यविष्ठदाशुषोनॄः पाहिशृणुधीगिरं÷। रक्षातोकमुतत्मना ॥ ३३ ॥ अन्नप-
तेन्नस्यनो देह्यनमीवस्य शुष्मिणं÷। प्रप्रदातारन्तारिषऽऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे ॥ ३४ ॥ द्यौः
शान्तिरन्तरिक्षं शान्ति÷पृथिवी शान्तिरापःशान्तिरोषधयः शान्ति÷। व्वनस्पतयः शान्तिर्व्विश्वेदेवाः
शान्तिर्ब्रह्म शान्तिः सर्व्वं शान्तिः शान्तिरेव शान्तिः सामा शान्ति रेधि ॥ ३५ ॥ यतोयतः
समीहसे ततोनोऽअभयङ्कुरु। शन्नं÷कुरु प्रजाभ्योभयन्नः पशुभ्यं÷॥३६॥ ॐ पालाशं भवति तेन ब्राह्मणो-
ऽभिषिञ्चति ब्रह्मवैपालाशो ब्रह्मणै वैनमेतदभिषिञ्चति ॥१॥ सर्वेषांवाऽएषवेदानांरसोयत्सांम सर्वेषामेवनै ॥३२॥

मतद्वेदानाꣳरसेनाभिषिञ्चति॥ २॥यद्वेवकल्पाञ्जुहोति प्राणावैकल्पामृतमुपवैप्राणाऽअमृतेनैवैनमेतदभि-षिञ्चति—अथ वठशः समानमासां जीवी पुत्रात्सां जीवीपुत्रो माण्डूकायने माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौसोमाहिव्येर्माहिसिर्व्वा मकक्षायणाद्वामकक्षायणोवात्स्याद्वात्स्यः शाण्डिल्या शाण्डिल्यः कुक्षेः कुक्षिर्यज्ञ वचसोम राजस्तं वा यना द्यज्ञे वचाराजस्तंवायनस्तुरात्कावषेपातुरः कावषेयः प्रजापतेः प्रजा-पतिर्ब्रह्मणो ब्रह्मस्वयंभुव ब्रह्मणो नमः॥ इत्यभिषिच्य अमृताभिषेकोऽस्तु इति वदेयुः। तथास्त्विति कर्ता। ततो द्विराचामेत्। पत्नी दक्षिणतः सकृदाचाम्योपविशेत्। (केचित् अभिषेकं न कुर्वन्तीति प्रयोगदीपे) कृतैतदभिषेककर्मणः समृद्ध्यर्थं दक्षिणां दास्ये इति केचित्।

इति स्वस्तिपुण्याहवाचनप्रयोगः।

---

(१) संक्षेपेण कर्मनिरूपयामः—स्वस्तिवाचनम् (पुण्याहवाचनम्) सर्वकर्मादौ गणपतिसम्पूज्य कलशं संस्थाप्य तत्र वरुणं संस्थाप्य युग्मान् ब्राह्मणान् स्वशाखीयान् सर्वशाखिनो वा सम्पूज्य "शान्तिरस्तु पुष्टिरस्तु" इत्यादीनिसप्त-विंशति वाक्यानि ब्राह्मणमुखेभ्यः श्रुत्वा "पुण्याहम्, कल्याणम्, ऋद्धिम्, स्वस्ति भवन्तो ब्रुवन्तु" इति सम्प्रार्थ्य पत्नीं वामभागे उपवेश्य कलशोदकेन दूर्वाम्रपल्लवैरभिषेकं कारयित्वा तेभ्यो दक्षिणां दद्यात्। इदं कर्म स्वस्तिवाचनम्, पुण्याहवाचनम् वा।

अथ मातृपूजन प्रयोगः—

गृहीत कुशाक्षतकुसुमपाणिर्यजमानः देशकालौ संकीर्त्य "करिष्यमाणामुककर्माङ्गत्वेन मातृपूजां करिष्ये" इति संकल्प्य रक्तवस्त्रास्तृतेपीठे उदग्दाक्षिणं पूर्वापरं च पञ्चपञ्चरेखाकरणेन षोडशकोष्ठानि संपाद्य प्रथमकोष्ठं द्वेधा विभज्यैवं सप्तदशसु कोष्ठेषु सुवर्णरजतादिप्रतिमासु पट्टादिलिखितमूर्तिषु वा पूगफलेषु वा ऽक्षतपुञ्जेषु वा गणेशपूर्वकगौर्यादिषोडशमातृदक्षिणोपक्रमा उदगपवर्गाः, प्रत्यगुपक्रमाः प्रागपवर्गा वा संस्थाप्य प्रतिष्ठाप्य पूजयेत्—

अब मातृका पूजन कहते हैं—

कर्ता हाथ में कुशा अक्षत पुष्पादि लेकर देशकालौ संकीर्त्य "करिष्यमाणामुककर्माङ्गत्वेन मातृपूजां करिष्ये" ऐसा संकल्प कर लाल वस्त्र से ढके हुये पीठ में सोलह कोष्ठ बनाकर सुवर्ण रजतादि प्रतिमाओं में या पट्टादि लिखित मूर्तियों में या पूगफलों में या अक्षतपुञ्जों में गणेश पूर्वक गौर्यादि षोडशमातृकाओं का स्थापन और पूजन करे ।

एह्येहि विघ्नेश्वर विघ्नशान्त्यै पाशाङ्कुशाब्जान् वरदं दधान ।
सूर्पाक्षसूत्रावरमनृमूर्ते रक्षाध्वरन्नो भगवन्नमस्ते ॥ १ ॥

ॐ गणानांन्त्वा गणपंतिꣳ हवामहे प्रियाणांन्त्वाप्रियपंतिꣳ हवामहे निधीनान्त्वां निधिपतिं ꣳ हवामहे व्वसो मम । आऽहमंजानि गर्ब्भधमा त्वमंजासि गर्ब्भधम् ।

ॐ भूर्भुवः स्वः गणपतये नमः गणपतिमावाहयामि स्थापयामि ॥ १ ॥

"गणानान्त्वा" इस मन्त्र से गणेश महराज का आवाहन और स्थापन करे ।

एह्येहि नीलोत्पलतुल्यनेत्रे श्वेताम्बरे प्रोज्वलशूलहस्ते ।
नागेन्द्रकन्ये भुवनेश्वरि त्वं पूजां ग्रहीतुं मम देवि गौरि ॥ २ ॥

ॐ आयङ्गौः पृश्निरक्रमी दसं दन्मातरम्पुरः । पितरंञ्चप्प्रयत्स्वं ॥

ॐ भूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि स्थापयामि ॥ २ ॥

"आयङ्गौः" इससे गौरी का आवाहन और स्थापन करे ।

एह्येहि पद्मे शशितुल्यनेत्रे पङ्केरुहाभे शुभचक्रहस्ते ।
सुरा सुरेन्द्रैरभिवन्दिते त्वं पूजां ग्रहीतुं मम यज्ञभूमौ ॥ ३ ॥

ॐ हिरण्यरूपाऽऊषसोव्विरोकऽउभाविन्द्राऽउदिथः सूर्य्यश्च ।
आरोहतं व्वरुणमित्रगर्तन्ततश्च क्षाथामदितिन्दितिञ्च मित्रोसि व्वरुणोसि ॥

ॐ भूर्भुवः स्वः पद्मायै नमः पद्मामा० स्थापयामि ॥ ३ ॥

"हिरण्यरुपा०" इस मन्त्र से पद्मादेवी का आवाहन और स्थापन करे ।

एह्येहि कार्तस्वरतुल्यवर्गे गजाधिरूढे जलजाभनेत्रे ।
शक्तिप्रिये प्रोज्ज्वलवज्रहस्ते पूजां ग्रहीतुं शचि देवि शीघ्रम् ॥ ४ ॥

ॐ निवेशनः सङ्गमनो व्वसूनां व्विश्श्वारूपाभिचष्टेशचीभिः । देवऽइव सविता सत्य धर्मेन्द्रो नतंस्थौ समरे पथीनाम् ।

ॐ भूर्भुवः स्वः शच्यै नमः शचीमा० स्थापयामि ॥ ४ ॥



"निवेशन०" इस मन्त्र से शचीदेवी का आवाहन और स्थापन करे ।

एह्येहि मेधे शुभभूरिवस्त्रे पूताम्बरे पुस्तकपात्रहस्ते ।
बुद्धिप्रदे हंससमाधिरूढे पूजां ग्रहीतुं मखमस्मदीयम् ॥ ५ ॥

ॐ मेधाम्मे व्वरुणो ददातु मेधामग्निः प्रजापतिः । मेधा मिन्द्रश्च व्वायुश्च मेधान्धाता ददातु मे स्वाहा ॥ ॐ भूर्भुवः स्वः मेधायै नमः मेधामावाह० स्थापयामि ॥ ५ ॥

**"मेधाम्मे व्वरुणो०"** इस मन्त्र से **मेधादेवी** का आवाहन और स्थापन करे ।

एह्येहि सावित्रे जगद्विधात्रि ब्रह्मप्रिये स्रुक्स्रुवपात्रहस्ते ।
प्रतप्तजाम्बूनदतुल्यवर्णे पूजां ग्रहीतुं निजयागभूमौ ॥ ६ ॥

ॐ सविता त्वां सवानांᳬ सुवतामग्निर्गृहपतीनाᳬंसोमो व्वनस्पतीनाम् । बृहस्पतिर्व्वाच इन्द्रो ज्ज्यैष्ठ्यायरुद्रः पशुभ्यो मित्रःसत्यो व्वरुणो धर्मपतीनाम् ॥

ॐ भूर्भुव स्वः सावित्र्यै नमः सावित्रीमा० स्थापयामि ॥ ६ ॥

**"सवितात्वा सवानां०"** इस मन्त्र से **सावित्रीदेवी** का आवाहन और स्थापन करे ।

एह्येहि शस्त्रास्त्रधरे कुमारि सुरासुराणां विजयप्रदात्रि ।
त्रैलोक्यवन्द्ये शुभरत्नभूषे गृहाण पूजां विजये नमस्ते ॥

ॐ विज्ज्यन्धनुः कपर्द्दिनोविशल्ल्योबाणवा२ँ उत । अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ।

ॐ भूर्भुवः स्वः विजयायै नमः विजयामावा० स्थापयामि ॥ ७ ॥

"विज्ज्यन्धनुः कपर्द्दिनो०" इस मन्त्र से विजयादेवी का आवाहन और स्थापन करे ।

एह्येहि पङ्केरुहलोलनेत्रे जयप्रदे प्रोज्वलशक्तिहस्ते ।
ब्रह्मादिदेवैरभिवन्द्यमाने जयेषु सिद्धिं कुरु सर्वदा मे ॥ ८ ॥

ॐ बह्वीनाम्पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ॥ इषुधिः सङ्काः पृतनाश्च सर्व्वाः पृष्ठेनिनद्धोजयतिप्प्रसूतः ॥

ॐ भूर्भुवः स्व जयायै नमः जयामा० स्थापयामि ॥ ८ ॥

"बह्वीनाम्पिता" इस मन्त्र से जयादेवी का आवाहन और स्थापन करे ।

एह्येहि चापासिधरे कुमारि मयूरवाहे कमलायताक्षि ।
इन्द्रादिदेवैरपि पूज्यमाने प्रयच्छासि त्वं मम देवसेने ॥ ८ ॥

ॐ इन्द्रऽआसान्नेता बृहस्पति र्द्दक्षिणा यज्ञःपुरऽएतुसोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्रम् ॥

ॐ भूर्भुव स्वः देवसेनायै नमः देवसेनामावा० स्था० ॥ ९ ॥

"इन्द्रऽआसान्नेता०" इस मन्त्र से देवसेना देवी का आवाहन और स्थापन करे ।

एह्येहि वैश्वानरवल्लभे त्वं कव्यं पितृभ्यः सततं वहन्ति ।
स्वर्गाधिवासे शुभशक्तिहस्ते स्वधे तु नः पाहि मखं नमस्ते ॥ १० ॥

ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः । अक्षन्पितरो मीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम् ।

ॐ भूर्भुवः स्व० स्वधायै नमः स्वधामावा० स्था० ॥ १० ॥

"पितृभ्यः—स्वधायि०" इस मन्त्र से स्वधा देवी का आवाहन और स्थापन करे।

एह्येहि वैश्वानरतुल्यदेहे तडित्प्रभे शक्तिधरे कुमारि।
हविर्गृहीत्वा सुरतृप्तिहेतोः स्वाहे च शीघ्रं मखमस्मदीयम् ॥

ॐ स्वाहा प्राणेभ्यः साधिपतिकेभ्यः। पृथिव्यै स्वाहाग्नये स्वाहान्तरिक्षाय स्वाहा वायवे स्वाहा दिवेस्वाहा सूर्याय स्वाहा ॥

ॐ भूर्भुवः स्वः स्वाहायै नमः स्वाहामावा० स्थापयामि ॥

"स्वाहा प्राणेभ्यः"—इस मन्त्र से स्वाहा देवी का आवाहन और स्थापन करे।

उपैत हे मातर आदिकर्त्र्यः सर्वस्य भूतस्य चराचरस्य।
देव्यस्त्रिलोक्याचितिदिव्यरूपा मखं मदीयं सफलं विधत्ते ॥

ॐ आपोऽअस्मान्मातरं शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वᳪ हि रिप्रम्प्रवहन्ति देवी रुदिदाभ्यः शुचिरा पूतऽएमि ॥ दीक्षातपसोस्तनुरसि तान्त्वा शिवाᳪ शग्माम्परिदधे भद्रंवर्णम्पुष्यन् ।

ॐ भूर्भुवः स्वः मातृभ्यो नमः मातृरावा० स्थापयामि ॥१२॥

"आपो अस्मान्मा०" इस मन्त्र से मातृदेवियों का आवाहन और स्थापन करे ।

समाह्वये सत्कृतलोकमातरः समस्तलोकैक विधान दक्षिणाः ।
सुरेन्द्रवन्द्याम्बुरुहाङ्घ्रिमञ्जुलाः कुरुध्वमैतन्मम कर्ममङ्गलम् ॥१३॥

ॐ रयिश्चमे रायश्चमे पुष्टञ्चमे पुष्टिश्चमे विभुचमे प्रभुचमे पूर्णञ्चमे पूर्णतरञ्चमे कुयवञ्चमे-क्षितञ्चमे न्नञ्चमे क्षुञ्चमे यज्ञेन कल्पन्ताम् ।

ॐ भूर्भुवः स्वः लोकमातृभ्यो नमः लोकमातृरावा० स्था० ।

"रयिश्च मे" इस मन्त्र से लोकमातृदेवियों का आवाहन और स्थापन करे ।

एह्येहि भक्ताभयदे कुमारि समस्तलोकप्रियहेतुमूर्ते ।
प्रोत्फुल्लपङ्केरुहेमञ्जुनेत्रे धृते मखं पाहि शिवस्वरूपे ॥१४॥

ॐ यत्प्रज्ञानमुतचेतो धृतिश्चयज्ज्योतिरन्तरमृतंम्प्रजासु । यस्मान्नऽऋते किञ्चनकर्मंक्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥

ॐ भूर्भुवः स्वः धृत्यै नमः धृतिमावा० स्थापयामि ॥१४॥

"यत्प्रज्ञानं" इस मन्त्र से धृति देवी का आवाहन और स्थापन करे ।

एह्येहि पुष्टे शुभरत्नभूषे रक्ताम्बरे रक्तविशालनेत्रे ।
भक्तप्रिये पुष्टिकरि त्रिलोके गृहाण पूजां शुभदे नमस्ते ॥ १५ ॥

ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥

ॐ भूर्भुवः स्वः पुष्ट्यै नमः पुष्टिमावा० स्थापयामि ॥ १५ ॥

"त्र्यम्बकं यजामहे०" इस मन्त्र से पुष्टिदेवी का आवाहन और स्थापन करे ।

एह्येहि तुष्टेऽखिललोकवन्द्ये त्रैलोक्यसन्तोषविधानदक्षे ।
पीताम्बरे शक्तिगदाब्जहस्ते वरप्रदे पाहि मखं नमस्ते ॥ १६ ॥

ॐ अङ्गान्न्यात्मन्भिषजातदश्विनात्मान्नमङ्गैः समधात्सरस्वती । इन्द्रस्यरूपꣳ शतमानमायुश्चन्द्रेण ज्योतिरमृतन्दधानाः ॥

ॐ भूर्भुवः स्वः तुष्ट्यै नमः तुष्टिमावा० स्थापयामि ॥ १६ ॥

"अङ्गान्यात्मन्०" इस मन्त्र से तुष्टिदेवी का आवाहन और स्थापन करे ।

उपैत मान्याः कुलदेवता मम लोकैकमाङ्गल्यविधानदीक्षिताः ।
पापाचलध्वंस-विशिष्टशक्तयः प्रसन्नवक्त्रा-करुणारुणेक्षणाः ॥ १७ ॥

ॐ प्राणाय स्वाहाऽपानाय स्वाहा व्यानायस्वाहा चक्षुषेस्वाहा श्रोत्रायस्वाहा व्वाचेस्वाहा मनसेस्वाहा ॥ ॐ भूर्भुवः स्वः कुलदेवतायै नमः कुलदेवतामा० स्थापयामि ॥ १७ ॥

"प्राणायस्वाहा०" इस मन्त्र से कुलदेवता देवी का आवाहन और स्थापन करे ।

एवं पूजनं समाप्य—

आयुरारोग्यमैश्वर्यं ददध्वं मातरो मम। निर्विघ्नंसर्वं कार्येषु कुरुध्वं सगणाधिपाः"

इति नारिकेलादिफलं समर्पयेत्। ततः कृताञ्जलिः गणेशपूर्वकगौर्यादिषोडशमातृणां पूजनकर्मणो यन्न्यूनमतिरिक्तं वा तत्सर्वं मातृणां प्रसादात्परिपूर्णमस्तु "गृहे वृद्धिशतानि भवन्तु" उत्तरे कर्मण्यविघ्नमस्तु। इति वदेत्॥

इति मातृकापूजनं समाप्तम्।

इस प्रकार पूजन समाप्त कर "आयुरारोग्यमैश्वर्यं" इससे नारिकेल फलादिक समर्पण करे। तब कृताञ्जलि होकर गणेशपूर्वक गौर्यादि षोडश मातृओं का पूजन कर्म में जो न्यूनातिरिक्त हो वह सब मातृकाओं के प्रसाद से परिपूर्ण हो। और घर में वृद्धिशत हों। उत्तर में कर्म निर्विघ्न हो ऐसा कहे।

## अथ वसोर्द्धाराप्रयोगः।

(१) वसोर्श्चेति राजस्य अग्नेर्वा तदुद्देश प्रवृत्तत्वेन तत्सम्बन्धिनी धारा वसोर्द्धारा। वसोश्च सर्वोत्सवप्रवर्तकत्वेन मङ्गलहेतुत्वेन विवाहादिकर्मसु पूजायुक्तेति रुद्रकल्पद्रुमे।

देशकालौ संकीर्त्य करिष्यमाणाममुककर्माङ्गत्वेन वसोर्धारा पूजनं करिष्ये इति संकल्प्य कुड्ये[२] वस्त्राच्छन्ने पीठादौ वा उपरि "श्रीः" इत्यक्षरं लिखित्वा तदधः कुङ्कुमेन एकं बिन्दुं, तदधो दक्षिणोत्तरं द्वौ बिन्दू तदधो दक्षिणोत्तरं त्रीन् बिन्दून् तदधश्चतुरः, तदधः पञ्च तदधः षट् तदधः सप्त बिन्दून् क्रमेण प्रादेशमात्रस्थले निर्माय अधस्तनेषु सप्तसु बिन्दुषु घृतेन दुग्धेन वा सप्तधारा उदकसस्थाः प्रदेशमात्रीः कुर्यात्—तत्रमन्त्रः ।

---

यद्वा वसोर्मन्त्रेण धारावसुधारेति प्राप्ते वसोर्द्धारेति प्रयोगोघृतमातृषु रूढः । वसोर्द्धारां जुहोतीत्यादौ तु कर्मनामधेयम् ॥

(२) "तत्पुरः सन्निधाने वा कुड्ये रेखाघृतेन च । धारालिङ्गेन मन्त्रेण पञ्च वा सप्त वा लिखेत् ॥ इति रुद्रयामलादौ ।

"नातिनीचोच्छ्रिते कुड्ये वसोर्द्धारास्तु सर्पिषा । पञ्च वा सप्त वा धारा वसोर्मन्त्रेण कारयेत् ।
दुग्धेन वा वसोर्द्धाराः कार्यास्तासां च देवताः । श्रीश्च लक्ष्मीर्धृतिर्मेधास्वाहा प्रज्ञा सरस्वती ।
माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः" इति परशुरामः ।
"कुण्ड्यलग्नां वसोर्द्धारां सप्तधारां घृतेन तु । कारयेत्पञ्चधारां वा नातिनीचां न चोच्छ्रिताम्" इति कर्मप्रदीपे ।

अत्र धाराकरणमात्रं वाचनिकम् । इतरत्सर्वमाचारप्राप्तमिति बोध्यम् । इयं वसोर्द्धारा आयुष्यमन्त्रजपश्च छन्दोगव्यतिरिक्तानाम- नावश्यकमिति बहवः ।

ॐ व्वसोः पवित्रं मासि शतधारं व्वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः[3] ॥

ततः तेनैव मन्त्रेण पुनः पठितेन ता धारा ( सप्त विन्दून् ) ऊर्ध्वभागे[4] गुडादिना मिथः श्लिष्टाः कुर्यात् । ततस्तेषु सप्तसु बिन्दूषु क्रमेण देवता आवाहयेत् ।

ॐ श्रियै नमः श्रियमावाहयामि १ ॐ लक्ष्म्यै नमः लक्ष्मी मा० २ ॐ धृत्यै नमः धृतिमा० ३ ॐ मेधायै नमः मेधामावा० ४ ॐ स्वाहायै नमः स्वाहामा० ५ ॐ प्रज्ञायै[5] नमः प्रज्ञामा० ६ ॐ सरस्वत्यै नमः सरस्वती मा० ७ ।

**अब वसोर्द्धारा प्रयोग कहते हैं—**

देशकालौ संकीर्त्य "करिष्यमाणामुककर्माङ्गत्वेन वसोर्द्धारा पूजनं करिष्ये" ऐसा संकल्प कर कुड्य में

( ३ ) अत्र यद्यपि "कामधुक्षः" इत्येतावता मन्त्रेणैकीकरणमुक्तमाधुनिकपद्धतिषु, तथापि तत्र प्रमाणाभावात् ।
( ४ ) "एकीकृत्योर्ध्वभागेतु कुङ्कुमेन गुडादिना" इति "नागवल्लीदलेनैव शुभेन पल्लवेन वा । धारास्तु पातयेत्सम्यक् अभितो-मेलयेत्ततः" इति च पठन्ति ।
( ५ ) पञ्चधारापक्षे प्रज्ञासरस्वत्योरभावः । "अन्नाल्लोपोवृद्धिर्वे" तिन्यायात् ।

या वस्त्राच्छादित पीठादियों में ऊपर में श्रीः यह अत्तर लिखकर उसके नीचे रोली या ( केसर ) से एक बिन्दु बनावे उसके नीचे दक्षिणोत्तर दो बिन्दू उसके नीचे दत्तिणोत्तर तीन बिन्दू उसके नीचे चार बिन्दू उसके नीचे पाँच बिन्दू उसके नीचे छ बिन्दू उसके नीचे सात बिन्दू इस क्रम से प्रादेशमात्र स्थल में निर्माण कर अधस्तन सात बिन्दुओं में घृत या दुग्ध से सप्तधारा उदक्संस्थ प्रादेशमात्र करे। उसमें "व्वसोः पवित्रम्" उसके बाद उसी मन्त्र से। पुनः पठित से वह धारा अर्ध्व भाग में गुडादि से मिला दे। उसके बाद उन सप्त विन्दुवों में क्रम से देवता का आवाहन करे। ॐ श्रियेनमः यहाँ से "सरस्वत्यैनमः" तक क्रम से आवाहन और स्थापन करे।

वैदिकमन्त्रैरावाहनपक्षे—

"सुवर्णपद्महस्तां तां विष्णोर्वक्षस्स्थले स्थिताम्।
त्रैलोक्यवल्लभां देवीं श्रियमावाहयाम्यहम्" ॥

ॐ मनसः कामं माकूतिं व्वाचः सत्य मशीय। पशुनाᳬ रूप मन्नस्य रसो यशः श्रीः श्रयतां म्मयि स्वाहा ॥

ॐ भूर्भुवः स्व श्रियै नमः श्रियमावाहयामि स्थापयामि ॥ १ ॥

वैदिकआवाहनपक्ष मे तो–

"मनसः काम" इससे आवाहन और स्थापन करे ॥ १ ॥

"शुभलक्षणसम्पन्नां क्षीरसागरसंवृताम् ।
चन्द्रस्य भगिनीं सौम्यां लक्ष्मीमावाहयाम्यहम् ॥

ॐ श्रीश्चंते लक्ष्मीश्च पत्न्यां वहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मं इषाण सर्वलोकम्मंऽइषाण ॥ ॐ भूर्भुवः स्वः लक्ष्म्यै नमः लक्ष्मीमावा० स्थापयामि ॥ २ ॥

"श्रीश्चते" इस मन्त्र से लक्ष्मीदेवी का आवाहन और स्थापन करे ॥

सर्वहर्षकरीं देवीं भक्तानामभयप्रदाम् ।
हर्षोत्फुल्लास्यकमलां धृतिमावाहयाम्यहम् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः । स्थिरै रङ्गैस्तुष्टुवाᳬ संस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥

ॐ भूर्भुवः स्वः धृत्यै नमः धृतिमावा० स्थापयामि ॥ ३ ॥

"भद्रं कर्णेभिः" इस मन्त्र से धृति देवी का आवाहन और स्थापन करे ।

सदसत्कार्यकरणक्षमांबुद्धिविशालिनीम् ।
भव्यकार्ये शुभकरीं मेधामावाहयाम्यहम् ॥

ॐ मेधाम्मे व्वरुणो ददातु मेधामग्निः प्रजापतिः । मेधामिन्द्रश्च व्वायुश्च मेधान्धाता ददातु मे स्वाहा ॥ ॐ भूर्भुवः स्वः मेधायै नमः मेधामा० स्थाप० ॥ ४ ॥

"मेधाम्मेव्वरुणो०" इस मन्त्र से मेधादेवी का आवाहन और स्थापन करे ।

हविर्गृहीत्वा सततं देवेभ्यो या प्रयच्छति ।
तां दिव्यरूपां वरदां स्वाहामावाहयाम्यहम् ॥

ॐ प्राणाय स्वाहा पानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा व्वाचे स्वाहा मनसे स्वाहा ॥ ॐ भूर्भुवः स्वः स्वाहायै नमः स्वाहामा० स्थाप० ॥ ५ ॥

"प्राणायस्वाहा" इस मन्त्र से स्वाहादेवी का आवाहन और स्थापन करे ॥ ५ ॥

"प्रणवस्यापि जननीं रसनाग्रास्थितां सदा ।
प्रागल्भ्यदात्रीं चपला प्रज्ञामावाहयाम्यहम् ॥

ॐ आयङ्गौः पृश्निरक्रमी दसदन्मातरम्पुरः । पितरञ्च प्रयत्स्वः ॥
ॐ भूर्भुवः स्वः प्रज्ञायै नमः प्रज्ञामा० स्थापयामि ॥ ६ ॥

"आयङ्गौ" इस मन्त्र से प्रज्ञादेवी का आवाहन और स्थापन करे ।

"सरस्वतीं सुरैर्वन्द्यां धातृपुत्रीं क्षमाकरीम् ।
विद्वज्जनस्य सत्कलीं देवीमावाहयाम्यहम् ॥

ॐ पावकानः सरस्वती व्वाजेभि र्व्वाजिनीवती । यज्ञंव्वष्टुधियावसुः ॥
ॐ भूर्भुवः स्वः सरस्वत्यै नमः सरस्वतीमावाह० स्थापयामि ॥ ७ ॥

"पावकानः सर०" इस मन्त्र से सरस्वती देवी का आवाहन और स्थापन करे ।

ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तं नो त्वरिष्टं यज्ञः समिमन्दधातु। विश्वे देवा सं इह मां दयन्तामों ३ प्रतिष्ठ ॥ इति मन्त्रावृत्त्या। श्रीः सुप्रतिष्ठिता भवन्तु"

"लक्ष्मीः सुप्रतिष्ठिता भवन्तु" इत्यादिवाक्येन पृथक् पृथक् सर्वासां प्रतिष्ठापनादि। अथवा "मनोजूति" इति सकृत् पठित्वा वसोर्द्धारादेवताः सुप्रतिष्ठिताः वरदा भवन्तु इति तन्त्रेण प्रतिष्ठापनम्। एवमेवासनस्नानगन्धादिमन्त्रा अपि आवृत्या सकृद्वा पठनीयाः।

उसके बाद "मनोजुतिः" इस मन्त्रावृत्ति से "श्रीः सुप्रतिष्ठिता भवतु" "लक्ष्मीः सुप्रतिष्ठिता भवतु" इत्यादि वाक्य से अलग २ सबों का प्रतिष्ठापनादि करे। अथवा मनोजुतिः इस मन्त्र को एक वार पढ़ "वसोर्द्धारा देवताः सुप्रतिष्ठिता वरदा भवन्तु" इस मन्त्र से प्रतिष्ठापनादि करे इसी प्रकार आसन स्नान गन्धादि मन्त्रों को आवृत्ति से या एक बार पढ़े।

## ( अथ ईशानकोणे इन्द्रध्वजपूजनम् )

तदनन्तर इन्द्रध्वज का पूजन ईशानकोण में करे—

ॐ त्रातारमिन्द्रमविता रमिन्द्रंᳪ हवे हवे सुहवᳪ शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रᳪ स्वस्तिनो मघवा धात्विन्द्रः ॥ ॐ इन्द्रध्वजाय नमः इति पञ्चोपचारैः सम्पूज्य ।

उसके बाद स्थल माताओं का स्थापन और पूजन करे—

ततः स्थलमातृकास्थापनं पूजनं च कुर्यात्—

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्तमातरः ॥

इति स्थलमातॄन् पञ्चोपचारैः षोडशोपचारैर्वा संपूज्य ।

ततः—आयुष्यसूक्तमन्त्रजपं कुर्यात् ।

तदन्तर आयुष्यमन्त्र का जप करे—

करिष्यमाण कर्मणोऽमङ्गल्यनाशार्थमायुष्यमन्त[1] जपं करिष्ये ।

(१) आ नो भद्रा इति दशर्चस्य सूक्तस्य गोतमो राहूगण ऋ० जगतीत्रिष्टुप्छन्दसी विश्वेदेवा दे० आयुष्यजपे वि० । मातृपूजनानन्तरं नान्दीश्राद्धात्पूर्वमायुष्यं वर्चस्यम् ( ३४. ५. ५२ ) इति मन्त्रत्रयस्य जप आयुष्यमन्त्र जप इति वृत्तिः । आ नो भद्रा इत्यादीनि सूक्तानि तदाधाराणि सामानि आयुष्याणीति हेमाद्रिः ।

ॐ आयुष्यं व्वर्चस्यर्ठ॰ रायस्पोषमौद्भिदम् । इदर्ठ॰ हिरण्यं व्वर्चस्वज्जैत्रायाविशतादुमाम् ॥१॥ न तद्रक्षांᳬसि न पिशाचास्तरन्ति देवानामोजः प्रथमजᳬ ह्येतत् । यो बिभर्ति दाक्षायणा हिरण्यर्ठ॰ स देवेषु कृणुते दीर्घमायुः समनुष्येषु कृणुते दीर्घमायुः ॥२॥ यदा बध्नन्दाक्षायणाहिरण्यर्ठ॰ शतानीकायसुमनस्यमानाः । तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ ३ ॥

कृतैतत् आयुष्यमन्त्रजपकर्मणः साङ्गतासिद्ध्यर्थं दक्षिणाद्रव्यमायुष्यमन्त्रपाठकर्तृकेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृज्ये ।

इति आयुष्यमन्त्रजपः समाप्तः ।

---

(१) "अश्वत्थामादि ऋषयो वसिष्ठप्रमुखास्तथा । मार्कण्डेयप्रभृतयः सर्वे सन्तुशिवार्चकाः ॥ १ ॥
जमदग्निः कश्यपश्च दीर्घमायुः करोतु मे । अन्ये ऋषिगणा देवा इन्द्राद्याश्च सशक्तिकाः ॥ २ ॥
भूसुराः सुतपोनिष्ठाः सत्यव्रतपरायणाः । दीर्घमायुः प्रयच्छन्तु सर्वकामस्य सिद्धये ॥ ३ ॥
यदायुष्यं चिरं देवाः सप्तकल्पान्त जीविनः । दत्तेनायुषा सम्यक् जीवेम शरदः शतम् ॥ ४ ॥
दीर्घानागास्तथा नद्यः समुद्रागिरयो दिशः । अनन्तायुषा तद्वत् जीवेम शरदः शतम् ॥ ५ ॥
सत्यानि पञ्चभूतानि विनाशरहितानि च । अविनाश्यायुषा तद्वज्जीवेम शरदःशतम् ॥ ६ ॥

## अथातिसङ्क्षिप्तो दाक्षिणात्याचारपरिप्राप्तः साङ्कल्पिकाभ्युदयिकश्राद्धप्रयोगः—

(२) आभ्युदयिकश्राद्धम्—

"नान्दीश्राद्धम्-वृद्धिश्राद्धम् पुत्रजन्म-विवाहादिकरूपोऽभ्युदयो वृद्धिः तस्मिन् क्रियमाणं श्राद्धमाभ्युदयिकश्राद्धमित्युच्यते।

"अग्न्याधानाभिषेकादाविष्टापूर्ते स्त्रिया ऋतौ। वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा॥

"पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम्। तत्र नान्दीमुख इति विशेषः समुदाहृत" इति च॥

अत्राभ्युदयिक श्राद्धविशेषे वृद्धिश्राद्धशब्दः परिभाष्यते, इति रुद्रकल्पद्रुमे।

"निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवच्चतत्'

इति पारस्करवचनात् कर्म चतुष्टयक्रियमाणं वृद्धिश्राद्धं कर्माङ्गमित्युच्यते।

आभ्युदयिकश्राद्धनिमित्तानि—

गर्भाधानादिसंस्कारेषु श्रवणादिषु इष्टेषु पूर्तेषु क्रतुसु व्रतोद्यापने वानप्रस्थाद्याश्रमस्वीकारे, तुलापुरुषादिमहादानादौ नूतनगृह-प्रवेशे राज्याभिषेके शान्तिकपौष्टिकेषु श्रौतकर्मसु उत्सवादौ तीर्थयात्रासमारम्भे पुत्रजन्मनि च कार्यम्।

व्रतोद्यापने दुष्टग्रहपीड़ानिवृत्यर्थं शान्त्यादौ च न कार्यमिति केचित्।

आभ्युदयिकश्राद्धोत्तरं देवतोत्थापनपर्यन्तं निषेधाः—

"नान्दीश्राद्धे कृते पश्चाद्यावन्मातृविसर्जनम्।

तत्रादौ श्राद्धदेशे पश्चिमदिशि देवद्विजार्थं द्वे पीठे उदक्संस्थे संस्थाप्य तत्र प्रागग्रौ द्वौ कुशवटून्[3] निधाय दक्षिणदिशि पित्रादिद्विजार्थं षट् पीठानि प्रत्यक्संस्थानि निधाय तेषु प्रागग्रान् षट् कुश-वटून् निदध्यात्। स्वस्योपवेशनार्थं वैश्वदेविकद्विजस्य दक्षिणतः पित्रादिद्विजानां पश्चिमत उभयो-

---

दर्शश्राद्धं क्षयाश्राद्धं स्नानं शीतोदकेन च। अपसव्यं स्वधाकारो नित्यश्राद्धं तथैव च॥
ब्रह्मयज्ञं चाध्ययनं नदीसीमातिलङ्घनम्। उपवासं व्रतं चैव श्राद्धभोजनमेव च।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि। अत्र वैश्यदेवोऽपि 'पितृभ्य स्वधानम' इति वर्जं कार्यम्।
"अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि। माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनम्॥ इति॥

(३) यज्ञवस्तुनि मुष्टौ च स्तम्बे दर्भबटौ तथा।
दर्भसङ्ख्या न विहिता विष्टरास्तरणेषु चेति कात्याय नोक्तेः। यदि तु—"पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टरः" इति वचनमस्ति तदा दर्भसङ्ख्यायाः संभवा संभवाभ्याम् व्यवस्थितो विकल्प इति नारायणवृत्तौ?"
यवैरिति। "वृद्धि श्राद्धेषु कर्त्तव्यास्तिलस्थाने यवास्तथेति" विष्णुधर्मोत्तरात्।
विवाहादि मङ्गलकर्मादौ दर्भस्थाने दूर्वा एव। "कुशस्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये" इति हेमाद्रौ।
"शुभायप्रथनान्तेन वृद्धौ संकल्पमाचरेत्। न षष्या यदि वा कुर्यान्महान्दोषोभिजायते। सम्बन्धनामस्यापि वर्जयेदत्रकर्मणि।

मध्ये आसनमुदगग्रमुदगग्रकुशास्तीर्णं स्थापयेत् । तत्रोपविश्य उदङ्मुखेन दैवम्, प्राङ्मुखेन पित्र्यं, कर्म कुर्यात् । तत्रादौ प्राङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य—

श्राद्धके पश्चिम दिशा में देव द्विजार्थ दो पीठ उदक्संस्थ स्थापन कर उसमें प्रागग्र दो कुशवटु रखकर दक्षिण दिशामें पित्रादि द्विजार्थ छ पीठों को प्रत्यक् संस्थापन कर उसमें प्रागग्र छ कुशवटुवों को रक्खे अपने बैठने के लिए वैश्यदेविक द्विजके दक्षिणसे पित्रादि द्विजाओं का पश्चिमसे दोनों के मध्यसे आसन उदगग्र कुशाको बिछादे उसमें बैठकर उदङ्मुख से दैव प्राक्मुख पित्र्यकर्म करे । उसमें प्राङ्मुख बैठकर आचमन और प्राणायाम कर देश और कालका संकीर्तन करे ।

"अस्मिन् कर्मणि साङ्कल्पिकमाभ्युदयिकश्राद्धं करिष्ये" इति संकल्प्य—

"सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवः स्वः इदं वः पाद्यम्"

"मातृपितामहीप्रपितामह्यो नान्दीनामुख्यः भूर्भुवः स्वः इदं वः पाद्यम्"

"पितृपितामहप्रपितामहा नान्दीमुखाः भूर्भुवः स्वः इदं वः पाद्यम्"

---

(४) पाद्यमिति ! अर्घत्वाविशेषात् पाद्यार्घोऽपिनिषिद्ध एवेति कश्चित् अत्र पाद्यं पादावनेजनं पादप्रक्षालनमिति शब्दत्रयो—पादानमादरार्थमेव "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः । वस्तुतस्तु इदं वः पाद्यमेतावदेव वाक्यं प्रयुक्तं रुद्रकल्पद्रुमादिपद्धतिषु युक्तं चैतत किन्तु शब्दत्रयोपादानं त्वनर्थकमेवेति ।

"मातामहप्रमातामहवृद्धप्रमातामहा सपत्नीका नान्दीमुखाः भूर्भुवः स्वः इदं वः पाद्यम्" इत्युक्त्वा सर्वत्र पात्रे सकुशयवाक्षतंजलं क्षिपेत् ॥

"अस्मिन्कर्मणि" संकल्प पढ़ पाद्य क्रमसे दे ।

ततः—"सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः भूर्भुवः स्वः इमे आसने वो नमः"
"मातृपितामहीप्रपितामह्यो नान्दीमुख्यः भूर्भुवः स्वः इमे आसने वो नमः"
"पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वः इमे आसने वो नमः"
"मातामहप्रमातामहावृद्धप्रमातामहानान्दीमुखा भुर्भूवः स्वः इमे आसने वो नमः"

इत्यासनानि दत्वा—

उसकेवाद क्रमसे आसन सब को देकर ।

एष वो गन्धः, इमे अक्षताः, इमानि पुष्पाणि, अयं धूपः, अयं दीपः, इमे वाससी, इदं यज्ञोप-

(५) 'सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानामिदमासनम्' इति केचित् ।

वीतम् , इति गन्धादि दत्वा—

गन्ध, अक्षत, पुष्प, धूप, दीप, वस्त्र और यज्ञोपवीतादि सब को देकर।

"सत्य[६]वसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः।"

"मातृपितामहीप्रपितामह्यो नान्दीमुख्यो भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा साम्पद्यतां वृद्धिः।"

"पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः।"

"मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः॥" इति गन्धादि दत्वा—

"सत्यवसुसं०" सबको गन्धाद्यर्चन करे।

"सत्यवसुँसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवः स्वः इदं युग्मब्राह्मणभोजनपर्याप्तमान्नानिष्क्रयभूतं

(६) 'सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः' इति केचित्।

(७) "सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्य" इति केचित्।

द्रव्यं दातुमहमुत्सृज्ये" "मातृपितामहीप्रतितामह्यो नान्दीमुख्यः भूर्भुवः स्वः इदं युग्मब्राह्मणभोजन-पर्याप्तामान्ननिष्क्रयभूतं द्रव्यं दातुमहमुत्सृज्ये" "पितृपितामहप्रपितामहा नान्दीमुखाः भूर्भुवः स्व इदं युग्मब्राह्मणपर्याप्तामान्ननिष्क्रयभूतं द्रव्यं दातुमहमुत्सृज्ये" "मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखा भूर्भुवः स्व इदं युग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयभूतं द्रव्यं दातुमहमत्सृज्ये ।"

उसकेबाद "सत्यवसु" इसको पढ़कर एक एक स्थान में दो दो भोजन निष्क्रय दे देवे ।

ततः क्षीरयवकुशजलानि दद्यात्-

"सत्यवसुसंज्ञका विश्वेदवा नान्दीमुखाः प्रीयन्ताम् ।
"मातृपितामहीप्रपितामह्यो नान्दीमुख्यः प्रीयन्ताम् ।
"पितृपितामहप्रपितामहा नान्दीमुखाः प्रीयन्ताम् ।
"मातामहप्रमातामह वृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः प्रीयन्ताम् ।

उसके बाद "सत्यवसु" इनको क्रम से दूध यव कुश और जल देंवे ।

ततः सकुशयवं जलं दक्षिणां चादाय–

"सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः भूर्भुवः स्वः कृतस्याभ्युदयिकस्य प्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये"

"मातृपितामहीप्रपितामह्यो नान्दीमुख्यः भूर्भुवः स्वः कृतस्याभ्युदयिकस्य प्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये" "पितृपितामहप्रपितामहाः नान्दीमुखाः भुर्भुवः स्वः कृतस्याभ्युदयिकस्य प्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये।"

"मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः भूर्भुवः स्वः कृतस्याभ्युदयिकस्य प्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रायिणींदक्षिणां दातुमहमुत्सृज्ये।"

उसके बाद कुश यव जल और दक्षिणा लेकर सत्यवसु संज्ञकों को दे देवे।

---

(८) "सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलवयवमूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृज्ये" इति केचित्।

माता पितामही चैव तथैव प्रपितामही ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
माता महस्तात्पिता च प्रमातामहकस्तथा ।
एते भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥

"माता पिता" इन श्लोकों को पढदे । इति पठेत्

ततः आचारात् किंचित् द्रव्यमादाय—

ॐ इडामग्ने पुरुदꣳसꣳ सनिङ्गोः शश्वत्तमꣳ हवमानायसाध । स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे ॥

उपास्मै गायतानरः पवमानायेन्दवे । अभि देवाँऽइयक्षते ॥

इति मन्त्रद्वयं जपन् पात्रेण सङ्घट्टनेन शब्दं कुर्यात् ।

उसकेबाद आचार से किञ्चित् द्रव्य लेकर "इडामग्ने" और "उपास्मैगायता" इन दो मन्त्रों को जपता हुआ पात्र से शब्द करे । इति वृद्धिश्राद्धम्

## ( अथ वरणम् )

तदनन्तर आचार्यादियों का क्रम से वरण करे। आचार्य आदि का गन्ध आदि से पूजन कर संकल्प पढ़ उनको वरण सामग्री देवे।

अस्मिन् कर्मणि त्वमाचार्यो भव। भवामि इति प्रत्युक्ते-कृताञ्जलिः—

"स्वागतं भो द्विजश्रेष्ठाः मदनुग्रहकारकाः।
इदमर्घ्यमिदं पाद्यं भवाद्भिः प्रतिगृह्यताम्"

---

मात्स्ये—

( ९ ) "अथातः संप्रवक्ष्यामि मूर्तिपानां तु लक्षणम्। स्थापकस्य समासेन लक्षणं शृणुत द्विजाः॥
सर्वावयवसम्पूर्णो वेदमन्त्र विशारदः। पुराणवेत्ता तत्वज्ञो लोभमोह विवर्जितः॥
कृष्णसारचरेदेशे उत्पन्नश्च शुभाकृतिः। शौचाचाररतो नित्यं पाखण्डकुलनिस्पृहः॥
समः शत्रौ च मित्रे च ब्रह्मोपेन्द्र हरिप्रियः। ऊहापोहार्थतत्वज्ञो वास्तुशास्त्रपरायणः॥
आचार्यश्च भवेन्नित्यं सर्वदोषविवर्जितः। मूर्तिपाश्च द्विजाश्चैव कुलीना ऋजवस्तथा" इति॥

इत्युक्त्वा—

"अस्मिन् कर्मणि एतत्तेऽर्घ्यम्"
"अस्मिन् कर्मणि एतत्ते पाद्यम्"
इति पादप्रक्षालनं

कृत्वा तज्जलमभिवन्द्य द्विराचामेत् । विप्राश्च पादप्रक्षालनोत्तरं द्विर्द्विराचामेयुः । ततो विप्रस्य दक्षिणं जान्वालभ्य "ऋत्विग्वरणनिमित्तमर्चयिष्ये" इत्युक्त्वा चन्दनाक्षतपुष्पमालादिभिरभ्यर्च्य साक्षतहस्तः कराभ्यां वरणसामग्रीमादाय—अमुकगोत्रोऽमुकप्रवरोऽमुकशर्मा यजमानोऽहममुकगोत्रममुकप्रवरं यजुर्वेदाध्यायिनममुकशर्माणमस्मिन् सनवग्रहमखकर्मणि आचार्यं त्वामहं वृणे" । आचार्योऽपि "वृतोऽस्मि" इत्युक्त्वा ॐ व्रतेनदीक्षा माप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणाश्रद्धामाप्नोति श्रद्धया सत्य माप्यते ॥

इति मन्त्रं पठेत् । ततो—यँदाबध्नन्दाक्षायणा हिरण्यꣳ शतानीं कायसुमनस्यमानाः । तन्मऽ-

(१०) गणाधिपं नमस्कृत्य नमस्कृत्य पितामहम् । विष्णुं रुद्रं श्रियं देवीं वन्दे भक्त्या सरस्वतीम् ॥

आंबन्धामिशत शांरदाया सुंष्मान्ज्ररदांष्ट्रिर्यथासंम् ॥

इति रक्षासूत्रबन्धनम् ।

---

स्थानक्षेत्रं नमस्कृत्य दिननाथं निशाकरम् । धरणीगर्भ सम्भूतं शशिपुत्रं बृहस्पतिम् ॥
दैत्याचार्यं नमस्कृत्य यज्ञारम्भे विशेषतः । शक्राद्या देवताः सर्वाः नमस्कृत्य मुनींस्तथा ॥
गर्गं मुनिं नमस्कृत्य नारदं मुनिसत्तमम् । वशिष्ठं मुनिशार्दूलं विश्वामित्रं महामुनिम् ॥
व्यासं कविं नमस्कृत्य सर्वशास्त्रविशारदम् । विद्याधिका ये मुनयः आचार्याश्च तपोधनाः ॥
सर्वे ते मम यज्ञस्य रक्षां कुर्वन्तु विघ्नतः । प्राचीं रक्षतु गोविन्द आग्नेयीं गरुड़ध्वज ॥
याम्यां रक्षतु वाराहो नारसिंहस्तु नैऋतीम् । केशवो वारुणीं रक्षेद्वायवीं मधुसूदनः ॥
उदीचीं श्रीधरो रक्षेदैशानीं तु गदाधरः । ऊर्ध्वं गोवर्धनधरो ह्यधस्ताद्धरणीधरः ॥
एवं दशदिशो रक्षेद्वासुदेवो जनार्दनः । यज्ञाग्रे रक्षताच्छङ्खः पृष्ठे पद्मं तथोत्तमम् ॥
वामपार्श्वे गदा रक्षेद्दक्षिणे तु सुदर्शनः । उपेन्द्रः पातु ब्रह्माणमाचार्यं पातु वामनः ॥
अच्युतः पातु ऋग्वेदं यजुर्वेदमधोऽक्षजः । कृष्णो रक्षतु सामानि ह्यथर्वं माधवस्तथा ॥
उपविष्टाश्च ये विप्रास्तेऽनिरुद्धेन रक्षिताः । यजमानं सपत्नीकं पुण्डरीकविलोचनः ॥
रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षताद्धरिः ।

परशुरामे--

"विप्राः[1]कार्याः[2] सदाचाराः श्रोत्रियाः[3] सत्यवादिनः ।
षट्कर्म[5] निरताः श्रेष्ठाः साधवश्च बहुश्रुताः ॥

---

( १ ) महाभारते ब्राह्मणलक्षणम्—

"क्षान्तं दान्तं जितक्रोधं जितेन्द्रियमकल्मषम् । नमस्यं ब्राह्मणं मन्ये शेषा शूद्रा इति स्मृताः ॥
कामक्रोधानृतद्रोहद्वेषलोभमदादयः । न सन्ति यत्र राजेन्द्र तं देवा ब्राह्मणं विदुः ॥
येन केन चिदाच्छन्नो येन केन चिदाशितः । यत्र क्वचिंनशायी स्यात्तं देवा ब्राह्मणं विदुः ॥

( २ ) "श्रोत्रियं छन्दोऽधीते" इति श्रोत्रियः ।

( ३ ) "सन्ध्या स्नानं जपो होमो देवतानां च पूजनम् ।
वैश्वदेवा तिथेयं च षट् कर्माणि दिने दिने" । इति पाराशरः ।

( ४ ) "स एष बहुश्रुतो भवति लोकवेदवेदाङ्गवित्वाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वभिश्चत्वारिंशतासंस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा समचारिकेष्वभिनीतः । गो० अ० ८।२।

जपनिष्ठास्तपोनिष्ठा धर्मिष्ठा वेदपारगाः ।
अनूचानाः कुलीनाश्च वेदशास्त्रविशारदाः ॥
पुण्यपापविचारज्ञा वेदवेदाङ्गपारगाः ।

---

( १ ) "मीमांसते यो वेदान् षड्भिरङ्गैः सविस्तरैः । इतिहासपुराणानि सभवेद् वेदपारगः" व्या० स्मृ० १४।४५ ।

अनूचानः—

( २ ) 'अनूचानः कल्पसूत्राध्यायीति' बौधायनः ।

"अनूक्तवाननूचानः शिष्येभ्यो विद्या सम्प्रदानं यः कृतवान् सोऽनूचानः । न्यूनाधिकज्ञः । ( छा० ३० )

विवाहव्रतयज्ञेषु श्राद्धे होमेऽर्चने जपे । आरब्धे सूतकं न स्यात् अनारब्धे तु सूतकम् । प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नान्दीश्राद्धे विवाहादौ श्राद्धपाकपरिक्रिया । वरणं मधुपर्कान्तं ज्ञेयम् ।

गोमुखम्—गोमुखी—

गोमुखमिव मुखं यस्य तत् । जपमाला रक्षणाय पट्टवस्त्रादि निर्मितं तत् "चतुर्विंशाङ्गुलमितं पट्टवस्त्रादि सम्भवम् । निर्मायाष्टाङ्गुलमुखं ग्रीवायां षड्दशाङ्गुलं ज्ञेयं । गोमुखयन्त्रं च सर्वतन्त्रेषु गोपितम् । तन्मध्ये स्थापयेन्मालां ग्रीवामध्यगते करे । प्रजपेद्विधिना गुह्यं वर्णमालाधिकं प्रिये । निधाय गोमुखे मालां गोपयेन्मातृजारवत्" वस्त्रेणाच्छाद्य तु करं दक्षिणं तु सदा जपेत् । तस्य स्यात्सफलं जप्यं तद्धीनमफलं स्मृतम्" एतद्वचन्मूलैव वस्त्रादि निर्मिता गोमुखीति कथ्यते । ॥४६॥

## ततः आचार्यं प्रार्थयेत्—

मालायां सूत्रनिर्णयः—

"कार्पाससम्भवं सूत्रं धर्मकामार्थ मोक्षदम् । तच्च विप्रेन्द्र कन्याभिनिर्मितं च शुशोभितम् ॥
शुक्लं रक्तं तथा कृष्णं पट्टसूत्रमथापि वा । शुक्लं रक्तं तथा पीतं कृष्णं वर्णेषु च क्रमात् ॥
सर्वेषामेव वर्णानां रक्तं सर्वेप्सितप्रदम् । त्रिगुणं त्रिगुणीकृत्य ग्रन्थयेच्छिल्पशास्त्रतः ॥
अष्टोत्तरशतं कुर्याच्चतुष्पञ्चाशिका तथा । सप्तविंशतिका कार्या ततो नैवाधिका हि सा ॥
अष्टोत्तरशता माला उत्तमा सा प्रकीर्तिता । चतुष्पञ्चाशिका माला मध्यमा सा प्रकीर्तिता ॥
अधमा प्रोच्यते नित्यं सप्तविंशति संख्यया ।

( १ ) अत्र देयवस्तूनि परशुरामे--

"भाजनं भाजनाधारश्छत्रोपानत्कमण्डलुः । आसनं वसनं मुद्रा वर्णभूषोपवीतकम् ।
"एतद्दशविधं देयं पदं वरणसिद्धये । पदाभावे त्रयं देयं पात्रवस्त्रमङ्गुलीयकम् । तदभावेऽथ ताम्बूलं दत्वा किञ्चित्प्रकल्पयेत् ।
वरणाङ्गोपहाराणां पात्राङ्गुलियवाससाम् ।
सर्वेषां निष्क्रयद्रव्यं यथोपपन्नमृत्विजे"

लिङ्गपुराणे—

"वस्त्रं युग्मं तथाऽप्यूरं केयूरं कर्णभूषणम् । अङ्गुलीभूषणं चैव मणिबन्धस्य भूषणम् ।

ॐ बृहस्पते ऽअतियदर्य्यो ऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऽऋतप्रजा तदस्मासु-द्द्रविणन्धेहि चित्रम् ।

"आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ १ ॥
मन्त्रमूर्तिर्भवान्नाथ संसाराद्यौघनाशन ।
प्रतिष्ठादिविधावस्मिन् कुरु कर्म यथोदितम् ॥ २ ॥
त्वत्प्रसादाच्च पूर्तस्य समग्रं फलमाप्नुयाम् ।
संसारभयभीतेन अयं यज्ञः सुभक्तितः ॥ ३ ॥

---

कण्ठाभरणयुक्तानि प्रारम्भे धर्मकर्मणः । पुरोहिताय दत्वाऽथ ऋत्विग्भ्यश्चापि दापयेत् ।

'इमानि वस्त्राभरणादीनि सदक्षिणान्याचार्याय तुभ्यमहं संप्रदे' इत्याचार्याय दत्वा ऋत्विग्भ्यो दद्यात् ।

अदेयानि—स्कान्दे—

"आपत्स्वपि न देयानि नव वस्तूनि सर्वदा । अन्वये सति सर्वस्वं दाराश्च शरणागताः । न्यासाधी कुलवृत्ति च निक्षेपः स्त्रीधनं सुतः ।

प्रारब्धस्त्वत्प्रसादेन निर्विघ्नं मे भवत्विति ।
यथा शक्रस्य वागीशः आचार्यः सर्वकर्मसु ।
तथा मया त्वमाचार्यो वृतोऽस्मिन् यज्ञकर्मणि ॥ ४ ॥ इति ॥

एवमन्येषां पृथक् पृथग्वरणं कुर्यात् । अथवा सर्वेषां गोत्रादीन्[१] पृथक् पृथगुच्चार्य ऋत्विजो[२] युष्मानहं वृणे" इतियुगपत्सर्वान् वृणुयात् । ततो ब्रह्मवरणे[३]–

---

( १ ) "अगस्त्याष्टम सप्तर्ष्यान्यतमापत्यं साक्षात्परंपराजातं यत् तत् गोत्रमित्युच्यते ।

( २ ) "ऋत्विगार्षेयोऽनूचान साधु चरणो वाग्म्यनूचाङ्गोऽनतिरिक्ताङ्गो द्वयसनश्चानति कृष्णोन्तनिश्वेतः । द्रा. श्रौ. १।१।७।

मनुः–

अन्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृता यस्य स तस्यर्त्विगिहोच्यते ॥

ऋत्विक्–

"ऋत्विक् कस्मादीरणः, ऋग्यष्टा भवतीति शाकपूणिः ऋतुयाजी भवतीति नैरुक्ताः ।

( ३ ) ब्रह्मा–

"सर्वस्मिन् यज्ञकर्मणि सावधानमन्वीक्षणं कर्म विशेषेऽनुमतिप्रदानं प्रायश्चित्तं च य उपदिशति स ब्रह्मा ।

ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतश्सुरुचो व्वेनऽआवः । सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्चयोनिमसतश्चविवः ॥

"यथा चतुर्मुखो ब्रह्मा सर्वलोक पितामहः ।
तथा त्वं यज्ञेऽस्मिन् ब्रह्माभवद्विजोत्तम् ॥

सदस्यवरणे—

सदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्म्यम् । सनिम्मेधामयासि षु स्वाहा ॥

"त्वन्नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणम् ।
त्वत्प्रसादाच्च विप्रर्षे सर्वं मे स्यान्मनोगतम् ॥
आपद्विमौक्षणार्थाय सदस्यो भव सुव्रत ॥

गाणपत्यवरणे—

गणानान्त्वा गणपतिᳬ हवामहे प्रियाणान्त्वा प्रियपतिᳬ हवामहे निधीनान्त्वानिधिपतिᳬ

हवामहे व्वसोमम । आऽहमंजानि ग॒र्भ॒ऽधमात्वमंजासि ग॒र्भ॒धम् ॥

"प्रारीप्सितस्य यज्ञस्य जपस्य हवनस्य च ।
निर्विघ्नेन समाप्त्यर्थं गणपं त्वामहं वृणे" इति ।

उपद्रष्टृवरणे सम्प्रदायागतसर्वोपद्रष्टृवरणे च—

ऋतयेस्तेन हृदयंव्वैरं हत्याय पिशुनं व्विविक्त्यैक्षत्तारमौपद्रष्ट्यायानुक्षत्तारम्बलायानु च रम्भुम्नेपरिष्कन्दम्प्रियायंप्प्रियवादिनमरिष्ट्याऽअश्वसादꣳस्वर्गायंल्लोकायं भागदुघंव्वर्षिष्ठाय नाकाय परिवेष्टारम् ॥

"भगवन् सर्वकर्मज्ञ सर्वधर्मभृतांवर ।

---

(१) "भगवन् सर्वकर्मज्ञ सर्वधर्मभृतांवर ।
वितते मम यज्ञेऽस्मिन् ऋत्विक्त्वं मे मखे भव" ॥
इत्येक एव मन्त्र आवर्तनीयः ।

वितते मम यज्ञेऽस्मिन्नुपद्रष्टा भव द्विज, इति।

ऋत्विग्वरणे—

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा। पूषा नः पातु दुरिताद् ऋतावृधो रक्षा माकिर्नो अघशंस ईशत ॥

( दिग्रक्षणप्रोक्षणञ्च )

ततः साचार्यो यजमानोऽन्यायतनान्महावेदेर्वा पश्चिमत उपविश्य।

उसके बाद आचार्य सहित यजमान के पश्चिम बैठकर तीन मन्त्र नीचे लिखे पढ़े।

---

मण्डपपक्षे तु—

"ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदेवतः। अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव"

'कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदेवतः। काश्यपेयस्तुविप्रेन्द्र ऋत्विक् त्वं मे मखे भव"—

"सामवेदस्तु पिङ्गाक्षो जागतः शक्रदैवतः। भारद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव"

"बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदेवतः। वैशम्पायन विप्रेन्द्र ऋत्विक् त्वं मे मखे भव॥

इति क्रमेण वेदपारायणे द्वारपालवरणे वा मन्त्राः।

इयं व्वेदिः परो अन्तः पृथिव्या ऽअयं यज्ञो भुवनस्य नाभिः । अयः सोमो व्वृष्णो ऽअश्वस्य रेतो ब्रह्मायं व्वाचः परमं व्योम ॥

सुभूः स्वयम्भूः प्रथमोन्तर्म्महत्यर्णवे । दधेह गर्भमृत्वियं यतो जातः प्रजापतिः ॥

भूरसि भूमिरस्यदितिरसि व्विश्वधाया व्विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीन्दृᳪह पृथिवीम्माहिᳪसीः ॥

इति मन्त्रत्रयं पठेत् ।

ततो वामहस्ते गौरसर्षपान् लाजांश्च गृहीत्वा—

उसके बाद बाम हाथ में पीली सरसों और लावा को ग्रहण कर ।

रक्षोहणं व्वलगहनं व्वैष्णवीमिदमहन्तं व्वलगमुत्किरामि यम्मे निष्ट्यो यम मात्यो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे

 

सबन्धुर्य्यमसबन्धुर्न्निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सजातो यम संजातोनिचखानोत्कृत्याङ्किरामि ।

रक्षोहणो वोव्वलगहनः प्प्रोक्षामि व्वैष्णवान्रक्षोहणो वो व्वलगहनो वनयामि व्वैष्णवान्रक्षो
हणो वोव्वलगहनो वस्तृणामि व्वैष्णवान्रक्षोहणौ वांव्वलगहनाऽउपदधामि वैष्णवी रक्षोहणौ वां
व्वलगहनौ पर्य्यूहामि वैष्णवी व्वैष्णवमसि व्वैष्णवास्स्थ ॥

रक्षसां भागोऽसि निरस्तꣳ रक्षऽइदमहꣳ रक्षोभितिष्ठामीदमहः रक्षोवबाधऽइदमहः रक्षो
धमन्तमोनयामि । घृतेन द्यावा पृथिवीप्प्रोर्ण्णुवाथां व्वायो व्वेस्तो कानांमग्ग्निराज्ज्यस्य व्वेतु स्वाहा
स्वाहा कृतेऽउर्द्ध्वनभसम्मारुतङ्गच्छतम् ॥

रक्षोहाव्विश्श्वचर्षणि रभियोनि मयोहते । द्रोणे सधस्थ मासदत् ॥

कृष्णुष्ष्वपाजःप्रसितिन्नपृथ्वीय्याहिराजेवामवाँ २ऽइभेन । तृष्ष्वीमनुप्रसितिन्द्रूणानोस्तासिव्वि- ॥५३॥
द्ध्यरक्षसस्तपिष्ठैः ॥ तव भ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः । तपूꣳष्ष्यग्नेजुह्वापतङ्गा-

न सं॑न्दितो॒ऽविसृं॒जविष्वं॑गुल्काः॑ । प्रति॒स्पशो॒ ऽविसृं॒जतूर्णि॑तमो॒ भवा॑पा॒युर्वि॒शो॒ऽअ॒स्या॒ऽअदं॑ब्धः । योनो॑दू॒रे॒ऽअ॒घशं॑सो॒ योऽअन्त्य॑ग्ने॒ माकि॑ष्टे॒ व्यथि॒रादं॑धर्षीत् ॥ उदं॑ग्ने तिष्ठ॒प्रत्या॑तनुष्ष्व॒न्य॑मित्राँ॑ २ऽ- ओषता तिग्महेते । योनो॒ऽअरा॑तिः समिधान च॒क्रे नी॒चातन्धं॑क्ष्यत॒ सन्नशुष्कं॑म् । ऊ॒र्ध्वोभ॑व॒प्रति॑ वि॒ध्याध्यस्म॒दा विष्कृं॑णुष्ष्व॒ दैव्या॑न्यग्ने । अवं॑स्थिरातं॑नुहिजातु॒जूनां॑ज्जा॒मिमजा॑मि॒म्प्रमृं॑णीहि॒ शत्रूं॑न् । अ॒ग्नेष्ट्वा॒तेजं॑सा सादयामि ।

अप सर्पन्तु ते भूता ये भूता भूमि संस्थिता । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

---

यज्ञियवृक्षाः—ब्रह्मपुराणे—

पलाशाश्वत्थश्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरो बिल्वश्चन्दनः सरलस्तथा ।
शालश्च देवदारुश्च खादिरश्चेति याज्ञिकाः ॥

---

( १ ) अग्निः अश्वोभूत्वा यस्मिन् वृक्षे पुरा संवत्सर मवासीत् स वृक्षः अश्वत्थः ( तै. ब्रा. १।१।३।९ अथ सा. ६।१।१।१ )

अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।
सर्वेषामविरोधेन शान्तिकर्म समारभे ॥
यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥
भूतानि राक्षसा वापि येत्र तिष्ठन्ति केचन ।
ते सर्वे प्यपगच्छन्तु शान्तिकं तु करोम्यहम् ॥

इति मन्त्रैः सर्षपान् विकिरेत् । ततः एकस्मिन् पात्रे पञ्चगव्यं सम्पादयेत्—
ॐ भुर्भूवः स्वः तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो यो न प्रचोदयात् ।
गोमूत्रं,
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।

(१) "ताम्रास्तनश्वेतकृष्णनीलानामाहेद्द्रवाम् । गोमूत्र गोमय क्षीरदधि सर्पींषि च क्रमात् ।"
"सर्वतः पञ्चगव्येन प्रोक्षयेद्यागमण्डपम् । आपोहिष्ठा तृचेनैव ततः स्वस्त्ययनं जपेत् ॥"

ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियम् । गोमयम्,

आप्यायस्वसमेंतु ते विश्वतं÷ सोमवृष्ण्यम् । भवावाजस्य सङ्गथे ।

ॐ दधि क्राव्णोऽअकारिषजिष्णो रश्वस्य व्वाजिनं÷ । सुरभिनो मुखांकरत्प्रणआयूंषि तारिषत ॥

आज्यम्,

तेजोऽसीशुक्रमस्यमृतमसिधामनामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥

देवस्यत्वा सवितुः प्रसवेऽश्विनोर्ब्बाहुभ्यां पूष्णो हस्ताभ्याम् ।

कुशोदकमादाय प्रणवेन यज्ञकाष्ठेनालोड्य

आपोहिष्ठा मयो भुवस्तानं ऊर्जेदधातन । महेरणाय चक्षसे ।

कुशैः—कर्मभूमिं प्रोक्षेत् । ततः कृताञ्जलिः—

स्वस्तिन इति मन्त्रं पठित्वा—"देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्व" इति वदेत् ।

## अथ सर्वतोभद्रदेवता स्थापनक्रमः--

अद्यातिथौ अस्मिन् कर्मणि महावेद्याममुकमण्डले ब्रह्मादिदेवतानां स्थापनं पूजनं च करिष्ये ।

एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्धं पितृदेवताभिः ।
सर्वस्यधातास्यामितप्रभावो रक्षाध्वरं नः सततं शिवाय ॥

---

सर्वतोभद्रकारिका—

(१) ब्रह्मस्थानं स्मृतं मध्ये सोममुत्तरतो दिशि । ईशानं च तथैशान्यां ऐन्द्यामिन्द्रं प्रकल्पयेत् ॥ १ ॥
आग्नेय्यामग्निमावाह्य दक्षिणे यममावहेत् । नैऋत्यां निऋतिं न्यस्य प्रतीच्यां वरुणं न्यसेत् ॥ २ ॥
वायव्यां वायुमावाह्य, वायुसामान्तरे वसून् । सोमेशानकयोर्मध्ये रुद्राएकादशस्मृताः ॥ ३ ॥
ईशानेन्द्रान्तराले च आदित्यान् द्वादशन्यसेत् । इन्द्राग्न्योर्मध्यभागे च अश्विनौ देवकौ न्यसेत् ॥ ४ ॥
यमाग्न्योर्मध्यदेशे च विश्वेदेवा सपैतृकाः । यमनैऋत्ययोर्मध्ये सप्तयक्षांश्च यजेत् ॥ ५ ॥
मध्ये निर्ऋतिवारुण्योः सर्पान् सम्पूजयेत्सुधीः । वरुणनिलयोर्मध्ये गन्धर्वासरसो यजेत् ॥ ६ ॥
ब्रह्मसोमान्तराले च स्कन्दं नन्दीश्वरं तथा । यथा शूलमहाकालावेकतन्त्रेण लो पृथक् ॥ ७ ॥
ब्रह्मेशानान्तरेदेशे दक्षान् सम्पूजयेत्सुधी । ब्रह्मेन्द्रमध्यभागे तु दुर्गां विष्णुं च पूजयेत् ॥ ८ ॥
ब्रह्माग्न्योर्मध्यदेशे च स्वधामावाहयेत्ततः । यम ब्रह्मान्तराले च मृत्युरोगान् प्रपूजयेत् ॥ ९ ॥

ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः । सबुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च योनि मसंतश्च व्विवः ॥ मध्ये ब्रह्माणं, ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि ॥

इसके मध्य में ब्रह्मा का आवाहन और स्थापन करे ।

एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेनसाकम् ।
सर्वौषधीभिः पितृभिः सहैव गृहाणपूजां भगवन्नमस्ते ॥

---

ब्रह्मनैऋत्ययोर्मध्ये गणेशं चापि विन्यसेत् । वरुणब्रह्मणोर्मध्ये अपश्चैव तु पूजयेत् ॥ १० ॥
वायु ब्रह्मान्तरे चैव मरुतोऽष्टौ प्रकीर्त्तिता । ब्रह्मणः पाददेशे तु मेदिनीं परिकल्पयेत् ॥ ११ ॥
उत्तरे ब्रह्मणो गङ्गादिनदीः सप्तसागरान् । मेरुं चेति अथोदक्तो दिगीशानां तथाऽऽयुधान् ॥ १२ ॥
गदां त्रिशूलं वज्रं च शक्ति दण्डं सुखङ्गकम् । पाशमङ्कुशमित्याहुः बाह्ये उत्तरतः कुमात् ॥ १३ ॥
तथैव बाह्यपरिधावुत्तरादि क्रमेण च । गौतमं च भरद्वाजं विश्वामित्रं च कश्यपम् ॥ १४ ॥
जमदग्निं तथाऽत्रिं च वसिष्ठं चाप्यरुन्धतीन् । तद्बाह्यपरिधौ स्थाप्या प्रागघष्टसु दिक्षि च ॥ १५ ॥
ऐन्द्रीं कौमारीं ब्राह्मीं च वाराही चाकण्डा वैष्णवीं ॥ १६ ॥
माहेश्वरीं वैनायकीं क्रमेणस्थाप्य मण्डले । एवं बौधायनः प्राह षट्पञ्चाशच्चदेवताः ॥ १७ ॥
ब्रह्मसोमेशशक्राग्नि यम निर्ऋति पाशभृत् । वायुर्वसवो रुद्राश्च आदित्या अश्विनस्तथा ॥ १ ॥

व्वयॅठं॰ सोमव्व्रते तवमनस्तनूषुबिभ्रंतः। प्रजावन्तः सचेमहि। उत्तरे वाप्यां, ॐ सोमाय नमः सोममावाहयामि स्थापयामि।

इससे उत्तर में सोम का आवाहन और स्थापन करे।

---

विश्वेदेवाः सप्तयक्षाः सर्पगन्धर्वअप्सरा। स्कन्दो नन्दीश्वरः शूल महाकालौ च दक्षकाः ॥ २ ॥
दुर्गाविष्णुः स्वधा चैव मृत्युरोगो गणेशकः। आपश्च सप्तमरुतः भूमिगङ्गा समुद्रकाः ॥ ३ ॥
मेरुश्चापि ततो बाह्यमण्डले उत्तरादितः। गदां त्रिशूल ४ गौतम च ५ एन्द्री कौमारी ॥ ५ ॥
इति मण्डलदेवताक्रमकारिकाः।

हेमाद्रौ स्कान्दे—

"प्रागुदीच्यां गता रेखाः कुर्यादेकोनविंशतिः। खण्डेन्दुस्त्रिपदैः कोणे शृङ्खला पञ्चभिः पदैः॥
एकादशपदा वल्ली भद्रन्तु नवभिः पदैः। चतुर्विंशत्पदावापि परिधिः विंशतैः पदैः ॥
मध्ये तु षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम्। श्वेतेन्दुः शृङ्खला कृष्णा वल्ली नीलेन पूरयेत् ॥
भद्रारुणा सिता वापी परिधिः पीतवर्णिका। बाह्यान्तरदलैः श्वेता कर्णिका पीतवर्णिका ॥
परिध्या वेष्टितं पद्मं बाह्ये सत्वरजस्तमः। तन्मध्येस्थापयेद्देवान् ब्रह्माद्यांश्च सुरासुरान् ॥ इति ॥
"शैवव्रतं विना सर्वव्रतोद्यापनकर्मसु। कार्यं सुशास्त्रदृष्ट्या च सर्वतोभद्रमण्डलम् ॥

एह्येहि यज्ञेश्वर नस्त्रिशूलकपालखट्वाङ्गधरावसार्धम् ।
लोकेन यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥

ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे व्वयम् । पूषानो यथा व्वेदसा मसद्वृधे

---

गणपति व्रते प्रोक्तं भद्रं वैनायकाभिधम् । देव्याव्रते गौरी भद्रं सूर्ये सूर्यस्य मण्डलम् ।
शैवे च लिङ्गतोभद्रं सर्वतो भद्रकं हरेः । स्वस्वभद्रकालाभे कार्यं वै हरिमण्डलम् ॥
भद्रेण पूजनाशक्तौ कार्यमष्टलं शुभम् । गोधूमान्नेन तत्कार्यं तण्डुलेनाथवाशुभम् ॥
"रजांसि पञ्चवर्णानि मण्डलार्थं तु कारयेत् । शालितण्डुलजं शुक्लं रक्तं कौसुम्भ सिन्दूरम् ॥
हरितालोद्भवं पीतं कृष्णं दग्धयवोद्भवम् । हरितं बिल्वपत्रोत्थमथवा कृष्णपीतजम् ॥
"श्वेतत्वेतण्डुलाः प्रोक्ताश्चणकान्न तु पीतके । रक्तवर्णे मसूराश्च गोधूमावास्मृता बुधैः ॥
अथवा रक्तवर्णे तु कुङ्कुमाक्ताक्षताः स्मृताः । हरिद्वर्णे च मुद्गान्नं माषान्नं कृष्णवर्णके ॥" इति
अत्र सति सम्भवे "सर्वतोभद्रपीठं तु सर्वाधारं प्रकीर्तितम्" इति वचनात्सर्वतोभद्रपीठ-
वेदिकायां ब्रह्मादिदेवता आवाह्य सम्पूज्य तदुपरि वस्त्रे ग्रहपीठादीनि निष्पादयेत् ॥
एवमेव रुद्रकल्पद्रुमादौ सर्वत्रोक्तम् ॥

रंक्षिता पायुरदंब्धः स्वस्तयें । ईशान्यां खण्डेन्दौ- ॐ ईशानाय नमः ईशानमावाहयामि स्थापयामि ॥३॥

इससे ईशान में ईशान ( शिव ) का आवाहन और स्थापन करे ।

एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश ।
संवीज्यमानोप्सरसां गणेन रक्षाध्वरन्नो भगवन्नमस्ते ॥

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ पूर्वे वाप्याम् ॐ इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि ॥

इससे पूर्व में इन्द्र का आवाहन और स्थापन करे ।

एह्येहि सर्वामरहव्यवाह मुनिप्रवीरैरमराभिजुष्ट ।
तेजोवता लोकगणेन साकं ममाध्वरं पाहि कवे नमस्ते ॥

ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशु-

चानो विश्वाद्वेषांꣳसि प्रमुमुग्ध्यस्मत्" ॥ आग्नेय्यां खण्डेन्दौ—ॐ अग्नये नमः अग्निमावाहयामि स्थाप०।

इससे अग्नि में अग्नि का आवाहन और स्थापन करे।

एह्येहि वैवस्वत धर्मराज सर्वामरैर्चितधर्ममूर्ते।
शुभाशुभानन्दशुचामधीश शिवाय नः पाहि भगवन्नमस्ते॥

ॐ सुगन्नुपन्थां प्रतिसन्न एहि ज्योतिषमध्ये ह्यजरन्नऽआयुः। अपैतु मृत्युरमृतन्नऽआगाद्वैवस्वतोनोऽअभयंकृणोतु। दक्षिणवाप्यां ॐ यमाय नमः यममावाहयामि स्थापयामि।

इससे दक्षिण में यम का आवाहन और स्थापन करे।

एह्येहि रक्षोगणनायक त्वं विशालवैतालपिशाचसङ्घैः।
ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते॥

ॐ असुन्न्वन्तम यजमानमिच्छस्तेनस्येत्यामन्न्विहितस्करस्य। अन्न्यमस्मादिच्छसातऽइत्या-

नमोऽदेवि निर्ऋते तुभ्यमस्तु । नैर्ऋत्यां खन्डेन्दौ ॐ निर्ऋतये नमः निर्ऋतिमावाहयामि स्थापयामि ॥

इससे नैर्ऋत्य में निर्ऋति का आवाहन और स्थापन करे ।

एह्येहि यादोगण वारिधीनां गणेन पर्ज्यन्यसहाप्सरोभि ।
विद्याधरेन्द्रामरणीयमान पाहि त्वमस्मान् भगवन्नमस्ते ॥

ॐ तत्वांयामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेहबोध्युरुशर्ठ० समानऽआयुः प्रमोषीः । पश्चिमे वाप्यास्–ॐ वरुणाय नमः वरुणमावाहयामि स्थापयामि ॥

इससे पश्चिम में वरुण का आवाहन और स्थापन करे ।

एह्येहि यज्ञेश समीरण त्वं मृगाधिरूढः सह सिद्धसङ्घैः ।
प्राणस्वरूपिन्सुखतासहाय गृहाण पूजां भगवन्नमस्ते ॥

ॐ आनोनियुद्भिःशतिनीभिरध्वरᳪ सहस्रिणीभिरुपयाहि यज्ञम् । वायोऽअस्मिन्त्सवने मादयस्वयूयम्पात स्वस्तिभिः सदानः ॥ वायव्यां खण्डेन्दौ ॐ वायवे नमः वायुमावाह० स्थाप० ॥

इससे वायव्य में वायु का आवाहन और स्थापन करे ।

एतैत सर्वे वसवो निधीशा रत्नाकराः सर्वसहस्रतेजा ।
धनस्वरूपा मम पान्तु यज्ञं गृह्णीत पूजां भगवन्न एताम् ॥

ॐ सुगावोदेवाः सदनाऽअकर्मयऽआजग्मेद सवनञ्जुषाणाः । भरमाणाव्वहमानाहवी ंष्यस्मेधत्त-व्वसवोव्वसूनिस्वाहा ॥ वायुसोमयोर्मध्ये अष्टौ वसून्[2]— ॐ अष्टवसुभ्योनमः अष्टवसूनावाहया० स्थाप० ।

इससे वायु और सोम के मध्य में अष्टवसु का आवाहन और स्थापन करे ।

एह्येहि यज्ञेश्वर नस्त्रिशूलकपालखट्वाङ्गधरावसार्धम् ।
लोकेन यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥

ॐ रुद्राः सः सृज्यं पृथिवीम्बृहज्योतिः समीधिरे । तेषाम्भानुरजस्रऽइच्छुक्रोदेवेषुरोचते ॥ सोमशानयो-र्मध्ये रुद्रान्—ॐ एकादशरुद्रेभ्यो[3] नमः एकादशरुद्रानावाह० स्थापया० ॥

इससे सोम और ईशान के मध्य में एकादश रुद्रों का आवाहन और स्थापन करे ।

---

(२) "ध्रुवोऽध्वरस्तथा सोम आपश्चैवानिलोनलः । प्रत्यूषश्च प्रभासश्च अष्टौ ते वसवः स्मृताः" इति ।

(३) "वीरभद्रश्चशम्भुश्च गिरिशश्च महायशाः । अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥

एह्येहि पद्मासनपद्मपाणे सुरक्तसिन्दूरसमानवर्णे ।
सप्ताश्व रक्ताम्बर सूर्य शीघ्रं गृहाण पूजां भगवन्नमस्ते ॥

ॐ यज्ञोदेवानाम्प्रत्येति सुम्नमादित्यासो भवतामृडयन्तः । आवोर्वाची सुमति र्ववृत्यादᳲहोश्चिद्याव्वरिवोवित्तरासंदादित्येभ्यस्त्वा ॥ ईशानेन्द्रमध्ये–द्वादशादित्येभ्यो नमः द्वादशादित्यानावाह० स्थाप० ॥

इससे ईशान और इन्द्र के मध्य में द्वादशादित्य का आवाहन और स्थापन करे ।

---

भुवनाधीश्वरश्चैव कपाली च विशांपतिः । स्थाणुर्भगश्च भगवान् रुद्रास्त्वेकादशस्मृताः ।

(४) "धातार्यमा च मित्रश्च वरुणोंऽशोभगस्तथा । इन्द्रो विवस्वान् पूषा च पर्जन्यस्त्वष्ट्र विष्णवः ॥
इत्येते द्वादशादित्या नामभिः परिकीर्तिताः" इति ।
"धात्रर्यममित्राख्या वरुणांशभागविवस्वदिन्द्रयुताः । पूषाह्वयपर्जन्यौ त्वष्टा विष्णुश्च मानवः प्रोक्ताः (अथ सा० ११।८।२)

द्विभुजौ देवभिषजौ कर्तव्यौ देवसंयुतौ ।
तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः ॥

ॐ या वाङ्कशामधुमत्यश्विनासूनृतावती । तया यज्ञम्मिमिक्षतम् ॥ इन्द्राग्न्योर्मध्ये–ॐ अश्विभ्यां नमः अश्विनौ आवाह० स्था० ॥

इससे इन्द्र और अग्नि के मध्य में अश्विनी कुमारों का आवाहन और स्थापन करे ।

विश्वानावाहयिष्यामि देवतानां वरप्रदाः ।
आयान्तु मम यज्ञेस्मिन्विश्वेदेवास्त्रयोदश ॥

ओमांसश्चर्षणी धृतोव्विश्वेदेवा सऽआगंत ॥ दाश्श्वाᳬंसो दाशुषं÷सुतम् ॥
अग्नियमयोर्मध्ये–ॐ विश्वेभ्योदेवेभ्यो नमः विश्वान् देवान् आ० स्था० ॥

इससे अग्नि और यम के मध्य में विश्वेदेवों का आवाहन और स्थापन करे ।

एह्येहि यक्षोगणनायक त्वं विशालवैतालपिशाचसङ्घैः ।
ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥

ॐ अभित्यन्देवꣳ सवितारमोण्योः कविक्रतुमर्चामिसत्यसवꣳ रत्नधामभिप्रियम्मतिङ्कविम् । ऊर्द्ध्वा यस्या मतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीतसुक्रतुः कृपास्वः प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि । यमनिर्ऋतिमध्ये ॐ यक्षेभ्योनमः यक्षानावाह० स्थापया० ॥

इससे यम और निर्ऋति के मध्य में यक्षों का आवाहन और स्थापन करे ।

एतैत सर्पाः शिवकण्ठभूषा लोकोपकाराय भुवं वहन्तः ।
जिह्वाढ्योपेत मुखामदीयां गृह्णीत पूजां सुखदां नमो वः ॥

ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये ऽअन्तरिक्षे ये दिवितेभ्यः सर्पेभ्यो नमः ॥ निर्ऋतिवरुणयोर्मध्ये—ॐ भूतनागेभ्यो नमः भूतनागानावाह० स्थाप० ॥

इससे निर्ऋति और वरुण के मध्य में नागों का आवाहन और स्थापन करे ।

आवाहयेऽहं सुरदेवसेव्याः स्वरूपतेजो मुखपद्मभासः ।
सर्वामरेशैः परिपूर्णकामाः पूजां गृहीतुं मम यज्ञभूमौ ॥

ॐ ऋताषाडृतधामा ग्निर्गन्धर्वस्तस्यौषधयोप्सरसो मुदोनाम । सनऽइदम्ब्रह्मक्षत्रम्पातु तस्मै स्वाहा व्वाट्ताताभ्यः स्वाहा ॥ वरुणवाय्वोर्मध्ये--गन्धर्वाप्सरोभ्यो नमः गन्धर्वाप्सरसः आवा० स्थाप० ॥

इससे वरुण और वायु के मध्य में गन्धर्व और अप्सरों का स्थापन करे ।

एह्येहि देवेश्वर शम्भुसूनो मयूरगामिन्सुरसिद्धसङ्घैः ।
संस्तूयमानात्मशुभाय नित्यं गृहाण पूजां भगवन्नमस्ते ॥

---

( १ ) स्वानः, भ्राजः, अङ्घारिः, वम्भारिः, हस्तः, सुहस्तः, कृशानुः, विश्वावसुः, मूर्धन्वान्, सूर्यवर्चा, कृतिः, इत्येकादश गन्धर्वगणाः ॥ ( तै० अ० १०६ )
अप्सं रूपं राति गृह्णातीत्यप्सरा च पुञ्जिकास्थला, क्रतुस्थला, मेनका, सहजन्या, प्रम्लोचन्ती, अनुम्लोचिन्ती, विश्वाची, घृचाची, उर्वशी, पूर्वचित्तिः, १० शु० य० १५।१६ ।

ॐ यदक्रन्दः प्रथमञ्जायमानऽ उद्यन्त्समुद्रादुतवापुरीषात् । श्येनस्य पक्षा हरिणस्य बाहूऽउप-
स्तुत्यम्महि जातन्तेऽअर्व्वन् ॥ ब्रह्मसोमयोर्मध्ये–स्कन्दाय नमः स्कन्दमावा० स्था० ॥

इससे ब्रह्मा और सोम के मध्य में स्कन्द का आवाहन और स्थापन करे ।

एह्येहि देवेन्द्र पिनाकपाणे खण्डेन्दुमौलिप्रियशुभ्रवर्ण ।

गौरीश योगेश्वर यक्षसिद्धे गृहाण पूजां भगवन्नमस्ते ॥

ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनो ऽनिमिषऽएकवीरः
शतꣳ सेनाऽअजयत्साकमिन्द्रः ।

ॐ नन्दिने नमः नन्दिनमावा० स्था० ॥

इससे नन्दीका आवाहन और स्थापन करे ।

(१) १९-२०-२१, एषां नाममन्त्रेण रुद्रकल्पद्रुममयूखादौ सर्वत्रावाहनमुक्तम्, भद्रमार्तण्डे सम-
न्त्रमावाहनमस्ति ।

आयातमायातमुमाप्रियस्य प्रियौ मुनीन्द्रादिकसिद्धसेव्यौ ।
गृहीतमेतां मम शूलकालौ पूजां सुखाद्यं कुरु तं नमो वाम् ॥

ॐ यत्ते गात्रादग्निनापच्यमानादभिशूलन्निहंतस्यावधावति । मातद्भूम्म्यामाश्रिषन्मातृणेषु-देवेभ्यस्तदुशदभ्योरातमस्तु ।

ॐ शूलाय नमः शूलमावाह० ॥
ॐ महाकालाय नमः महाकालमावा० ॥

इससे महाकाल का आवाहन और स्थापन करे

---

(१) अत्र एकदेवतायाः षट्पञ्चाशत् गणनायामाधिक्यम् तत्र शूलमहाकालयोः एकवद्भावात् पृथक्त्वेना-गणिते सत्यपि एका एव देवता तेन न विरोधः । देवतास्तु षट्पञ्चाशद्देवतेति भद्रमार्तण्डे । रुद्रकल्पद्रुमयूखादौ तु सर्वत्र सप्त पञ्चाशद्देवताः स्वीकृता । प्रतिष्ठासरणौ—शूलमहाकालाभ्यां नमः शूलमहाकालौ आवा० इति समुदितयोरेकदेवतात्वमुक्तम् अश्विभ्यामितिवत् । अस्मिन् पक्षे "अवरुद्रम्" इत्येक एव मन्त्रः नाममन्त्रेण वाऽऽवाहनम् , इति ॥

एह्येहि देवालय विश्वमूर्ते चतुर्मुखश्रीधरशम्भुमान्य ।
सुपुस्तकाक्षस्त्रुवपात्रपाणे गृहाण पूजां भगवन्नमस्ते ॥

ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥

ॐ अदितये नमः, अदितिमावाह० स्थाप० ॥

इससे अदिति का आवाहन और स्थापन करे ।

एह्येहि दुर्गे दुरितौघनाशिनी प्रचण्डदैत्यौघविनाशकारिणी ।
उमे महेशार्धशरीरधारिणी स्थिरा भव त्वं मम यज्ञकर्मणि ॥

ॐ अम्बेऽअम्बिकेऽम्बालिके नमानयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ।
ब्रह्मेन्द्रमध्ये-दुर्गायै नमः दुर्गामावा० स्था० ॥

इससे ब्रह्मा और इन्द्र के मध्य में दुर्गा का आवाहन और स्थापन करे ।

एह्येहि नीलाम्बुदमेचक त्वं श्रीवत्सवक्षः कमलाधिनाथ ।
सर्वामरैः पूजितपादपद्म गृहाण पूजां भगवन्नमस्ते ॥

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे । तत्रैव विष्णवे नमः विष्णुमा० स्था० ॥

इससे वहाँ पर विष्णु का आवाहन और स्थापन करे ।

सुखाय पितॄन् कुलवृद्धिकर्तॄन् रक्तोत्पलाभानिह रक्तनेत्रान् ।
सुरक्तमाल्याम्बरभूषितांश्च नमामि पीठे कुलवृद्धिहेतोः ॥

ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्" ब्रह्माग्निमध्ये ॐ स्वधायै नमः स्वधामावाह० स्थाप० ॥

इससे ब्रह्मा और अग्नि के मध्य में स्वधा का आवाहन और स्थापन करे ।

(१) उदीरतामिति मयूखे ।

आवाहयाम्यहं रोगमनेकविधलक्षणम् ।
नानालङ्कारसंयुक्तं रक्तश्मश्रुविलोचनम् ॥

ॐ परंम्मृत्योऽअनुपरेँ हि पन्थां यस्तेऽअन्यऽइतरो देवयानात् । चक्षुष्मते शृण्वते तेँब्रवीमि मानः प्रजाथंरीरिषोमोत व्वीरान्" ब्रह्मयममध्ये—ॐ मृत्युरोगेभ्यो नमः मृत्युरोगान् आवाह० स्थाप० ।

इससे ब्रह्मा और यम के मध्य में मृत्युरोगों का आवाहन और स्थापन करे ।

एह्येहि विघ्नाधिपतेसुरेन्द्र ब्रह्मादिदेवैरभिवन्द्यपाद ।
गजास्य विद्यालय विश्वमूर्ते गृहाण पूजां भगवन्नमस्ते ॥

ॐ गणानांत्वा गणपतिँ हवामहे प्रियाणान्त्वा प्रियपतिँ हवामहे निधीनान्त्वां निधिपतिँ हवामहे व्वसो मम । आऽहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम्" ब्रह्मनिर्ऋतिमध्ये—

ॐ गणेशाय नमः गणेशमावाह० स्थाप० ॥

इससे ब्रह्मा और निर्ऋति के मध्य में गणेश का आवाहन और स्थापन करे ।

एह्येहि लोकेश्वर पाशपाणे यादोगणैर्वन्दितपादपद्म ।
पीठेऽत्र देवेश गृहाण पूजां पाहित्वमस्मान् भगवन्नमस्ते ॥

ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तु पीतये । शय्योरभिस्त्रवन्तुनः । ब्रह्मवरुणमध्ये-अद्भ्यो नमः अपः आवाहया० स्थाप० ॥

इससे ब्रह्मा और वरुण के मध्य में जल का आवाहन और स्थापन करे ।

एह्येहि यज्ञेश समीरण त्वं मृगाधिरूढः सह सिद्धसङ्घैः ।
प्राणस्वरूपिन् सुखतासहाय गृहाण पूजां भगवन्नमस्ते ॥

ॐ मरुतो यस्य हि क्षये पाथादिवोविमहसः । ससुगोपातमोजनः" ब्रह्मवायुमध्ये—ॐ मरुद्भ्यो नमः मरुतः आवाहया० स्थापया० ॥

इससे ब्रह्मा और वायु के मध्य में मरुतकाआवाहन और स्थापन करे ।

एह्येहि पातालधराधरेन्द्र नागाङ्गनाकिन्नरगीयमान ।

यक्षो नगेन्द्रामरलोकसङ्घैरनन्तरक्षाध्वरमस्मदीयम् ॥

ॐ स्योना पृथिवि नो भवान्नृक्षरानिवेशंनी । यच्छांनः शर्म सप्रथाः" ब्रह्मणः पादमूले-ॐ पृथिव्यै नमः पृथिवीमावा० स्थाप० ॥ ३१ ॥

इससे ब्रह्मा के पादमूल में पृथ्वी का आवाहन और स्थापन करे।

एह्येहि गङ्गे दुरितौघनाशिनी झषाधिरूढे उदकुम्भहस्ते ।
श्री विष्णुपादाम्बुजसम्भवे त्वं पूजां गृहीतं शुभदे नमस्ते ॥

ॐ पञ्चंनद्यः सरंस्वतीमपिंयन्ति सस्रोतसः । सरंस्वती तु पंञ्चधासादेशेभंवत्सरित् ॥ तत्रैव गङ्गादिनदीभ्योनमः गङ्गादिनदीः आवा०स्थापया० ॥ ३२ ॥

इससे गङ्गादि नदियों का आवाहन और स्थापन करे।

एह्येहि यादोगण वारिधीनां गणेन पर्जन्यसहाप्सरोभिः ।
विद्याधरेन्द्रामरगीयमान पाहित्वमस्मान्भगवन्नमस्ते ॥

आग्नेये चतुरस्रे चतुरङ्गुले चतुर्विंशाङ्गुले वा श्वेते अधोदृष्टिं सूर्याभिमुखं सोमं श्वेतपुष्पाक्षतै-रावाहयेत् ।

ॐ भूर्भुवः स्वः यमुनातीरोद्भव आत्रेयसगोत्र शुक्लवर्ण भो सोम इहागच्छ इहतिष्ठ ॐ सोमाय

---

( १ ) स्कान्दे—

"ईश्वरं त्र्यम्बकं चेति श्रीश्चते इति पार्वतीम् । यदक्रन्देति च स्कन्दं विष्णुं विष्णोरराडिति । आब्रह्मन्निति ब्रह्माणं सजोषा इति वाससम् । यमायत्वेति च यमं कालं कार्षिरसीति च । चित्रावस्विति मन्त्रेण चित्रगुप्तं निधापयेत्"

मन्त्रार्थदीपिकाकारमते—आब्रह्मन्निति स्थाने । "यमायत्वा" इति स्थाने क्रमशः "ब्रह्मयज्ञानं" "असिजमोऽसि" इतिमन्त्रपाठः ।

"सूर्यः सोमस्तथा भौमो बुधजीवसितार्कजाः । राहुः केतुरिति प्रोक्ता ग्रहालोकहितावहाः"

ग्रहरत्नावल्याम्—

"मण्डलव्यासः कथितः सूर्यस्य द्वादशाङ्गुलः । चतुरङ्गुलः सोमस्य त्र्यङ्गुलो लोहितस्य च । चतुरङ्गुलः सोमस्य गुरोश्चैव षडङ्गुलः । नवाङ्गुलस्तु शुक्रस्य अर्कपुत्रस्य द्व्यङ्गुलः । द्वादशाङ्गुलो राहोश्च केतोश्चैव षडङ्गुलः ॥ इति

'आदित्याभिमुखा इत्यस्य शुक्रार्कौ प्राङ्मुखौ इत्यस्य च प्राङ्मुखत्वम्रूर्ध्वदृष्टित्वम् , उदङ्मुखत्वं वामदृष्टित्वं दक्षिणे दृष्टित्वमित्यर्थः । तेन आदित्याभिमुखा इत्यनेन न विरोध इति स्मृतिकौस्तुभे लक्षहोमप्रकरणे स्पष्टम् ।

न्नमः सोममावाहयामि स्थापयामि ।

इमन्देवाइत्यस्य वरुणऋषिः अत्यष्टिश्छन्दः सोमो देवता सोमस्थापने विनियोगः ।

केचिदावाहनपूर्वकं स्थापनं कुर्वन्ति । तदयुक्तम्–"एवं ग्रहान् सनक्षत्रान् संस्थाप्येशानकोणगान् । आवाहनं ततः कुर्यात्सूर्यादीनां क्रमेण वै" इति वचनात् स्थापनावाहनयोर्भेदात्तन्मन्त्रैः स्थापनं व्याहृत्याऽऽवाहनमिति मदनरत्नग्रथाच्च ।

एकैकस्य ग्रहस्य स्मृतिष्वनेकैः पर्यायशब्दैरुपस्थितिदर्शनान्नत्यागादावेकस्य नियमः विनिगमकाभावात् । यथा–सूर्यः सोमस्तथा भौमः शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ, आदित्यादिग्रहाःसर्वे, मध्ये तु भास्करं विद्यात् इत्यादि । अतो यथेच्छं प्रयोगः ।

'जन्मभूगोत्रमग्निश्च वर्णास्थानमुखानि च' अज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः । इत्युक्तेः प्रयोगे ग्रहाणां जन्मभूगोत्रादिज्ञानमपेक्षितम् तत्ज्ञानं यद्यपि स्मरणात्मकं तथापि शिष्टाः प्रति मन्त्रमृष्यादिस्मरणवत् शब्दोच्चारणपूर्वकं कुर्वन्ति तत्कुत्रेत्याकाङ्क्षायां बौधायनीये आवाहनवाक्ये दर्शनादावाहनवाक्ये एव सर्वेषां संग्रहः कारणीयः ।

नवग्रहाणां देशाः गोत्राणि च वर्णाश्च आकाराश्च ( आश्व० गृ० पृ० २२२ )

ग्रहाणां जन्मभूमिः––

'उत्पन्नोऽर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः । अङ्गारकस्त्ववन्त्यां च मगधेषु हिमांशुजः । सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा । शनैश्चरस्य सौराष्ट्रे राहुर्बर्बरके तथा । अन्तर्वेद्यां तथा केतुरित्येता जन्मभूमयः ।

केचित् नक्षत्रदेवता एवं स्थापयन्ति नतु नक्षत्राणि तदप्ययुक्तम् । प्रदक्षिणक्रमेणैव कृत्तिकाप्रभृतीनि च । ईशानकोणादारभ्य चतुर्दिक्षु च विन्यसेत् सप्त सप्त च ऋक्षाणि स्थापयेन्मन्त्रपूर्वकम् । क्रमेण कृत्तिकादीनां मन्त्रा ज्ञेया विजानता, इति शौनकीयात् ।

ॐ भूर्भुवः स्वः इमन्देवा असपत्नꣳ सुवद्ध्वम्महते क्षत्राय महते ज्यैष्ठ्यायमहते जानराज्यायेन्द्रस्येन्द्रियाय । इममुमुष्य पुत्र ममुष्यै पुत्रमस्यै विश एषवोऽमीराजा सोमोऽस्माकं ब्राह्मणानाꣳराजा ॥

श्वेताम्बरश्वेतविभूषणश्च, श्वेतद्युतिर्दण्डधरो द्विबाहुः ।
चन्द्रोऽमृतात्मा वरदः किरीटी, श्रेयांसि मह्यं विदधातु देवः ॥

इस मन्त्र से चन्द्रमा का आवाहन और स्थापन करे ।

दक्षिणे त्रिकोणे त्र्यङ्गुले चतुरङ्गुले वा रक्ते दक्षिणदृष्टिं सूर्याभिमुखं भौमं रक्तपुष्पाक्षतैरावाहयेत् ।

ॐ भूर्भुवः स्वः अवन्तिदेशोद्भव भरद्वाजगोत्र रक्तवर्ण भो भौम इहागच्छ इहतिष्ठ ॐ भौमाय नमः भौममावाहयामि स्थापयामि ।

अग्निमूर्द्धेत्यस्य विरूपाक्ष ऋषिः गायत्रीछन्दः अङ्गारको देवता भौमस्थापने विनियोगः ।

---

(२) प्रणवव्याहृतिपूर्वकं मन्त्रमुच्चार्य स्थापयेत् ।

ग्रहाणां स्थापने वैदिका मन्त्रा प्रयोज्याः । 'आकृष्णेनेति मन्त्रेण मध्ये संस्थापयेद्रविम् । इत्यादिवचनात् ।

ॐ भूर्भुवः स्वः अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् । अपाᳬं रेताᳬंसि जिन्वति ॥३॥

रक्ताम्बरः रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत् ।
धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशस्तः ॥

इस मन्त्र से मङ्गल का आवाहन और स्थापन करे ।

ईशाने बाणाकारे चतुरङ्गुलपीते बुधं वामदृष्टिं सूर्याभिमुखं पीतपुष्पाक्षतैरावाहयेत् ।

ॐ भूर्भुवः स्वः मगधदेशोद्भव आत्रेयसगोत्र पीतवर्ण भो बुध इहागच्छ इहतिष्ठ ॐ बुधाय नमः बुधमावाहयामि स्थापयामि ॥

उद्बुध्यस्वेत्यस्य परमेष्ठी ऋषिः त्रिष्टुप्छन्दः बुधो देवता बुधस्थापने विनियोगः ।

---

(१) पूजायां प्रयोगपारिजातादौ होमात्पूर्वं ग्रहाणां पुष्पान्तं पूजनं विधाय होमोत्तरं धूपदीपादिभिस्तान् पूजयेदित्युक्तम् । अतो होमात्पूर्वोत्तरकालयोर्व्यवस्थया पूजाकार्या । स्थापनं च ग्रहादीनां पूजा संक्षेपतस्ततः इत्यस्याप्ययमेवाशयः ।

(२) ग्रहप्रतिमाधातवः—

"ताम्रकात् स्फटिकाद्रक्ताच्चन्दनात्स्वर्णकादथ । रजतादयसः सीसात्कांस्यात्कार्याः क्रमादिमे" ताम्रादीनां प्रमाणं शक्त्यनुसारेण कल्पनीयम् । अथवा ग्रहवर्णगन्धैर्वस्तुषु मूर्तयो लेख्याः ।

ॐ भूर्भुवः॒स्वः॒उद्बु॑ध्यस्वाग्ने॒प्रति॑जागृहि॒त्व मि॑ष्टापू॒र्ते सꣳ सृ॑जेथा म॒यं च॑ । अ॒स्मिन्त्स॒धस्थे॒ऽ-
अध्युत्त॑रस्मि॒न्विश्वे॑ दे॒वा यज॑मानश्च सीदत ॥

---

अन्यद्रव्याभावे सुवर्णमेव वा ग्राह्यम् । "सुवर्णमेकमेव वा सर्वेषाम् । इति आश्वलायनपरिशिष्टात् ( अ० २ । खं० ३ )
पूर्वं प्रतिमानामग्न्युत्तारणं कार्यम् । प्रतिमाभेदे मन्त्रावृत्तिः ।

"मध्ये स्थाप्यो रवीरक्तः सोमःश्वेतोऽग्निकोणके । दक्षिणेऽङ्गारकोरक्तः पीत ईशानके बुधः । बृहस्पतिरुदक्पीतः शुक्रः श्वेतस्तु पूर्वके । पश्चिमे तु शनिः कृष्णो राहु कालश्च नैरृते । वायव्ये केतवो धूम्रा एतच्च ग्रहमण्डलम् । सर्वे आदित्याभिमुखा आदित्यश्च प्राङ्मुखः स्थाप्यः ।

मण्डलानि संस्कारगणपतौ--

'पद्ममध्ये रविं रक्तं प्राङ्मुखं वर्तुलं सदा । अग्निकोणे सितं चन्द्रं चन्द्रार्धसदृशं शिवम् ।
दक्षिणे मङ्गलं विद्यात्त्रिकोणं लोहितं शुभम् । ऐशान्यां धनुराकारं पीतवर्णं तु सोमजम् ॥
उत्तरे पीतवर्णं च पद्माकारं बृहस्पतिम् । चतुरस्रं तु पूर्वस्यां शुक्लवर्णं तु भार्गवम् ॥
पश्चिमे कृष्णवर्णं तु दण्डाकारं शनैश्चरम् । नैरृत्यां मकराकारं कृष्णाङ्गं रविमर्दनम् ॥
धूम्रवर्णास्तु वायव्ये केतवः खड्गसंनिभाः ।

शान्तिमयूखे—याज्ञवल्क्यस्मृतौ

ग्रहयज्ञनिमित्तानि- ग्रहधीनानरेन्द्राणामुच्छ्रायाः पतानि च । भावाभावौ च जगतस्तस्मात् पूज्यतमा ग्रहाः ।

पीताम्बरः पीतवपुः किरीटी चतुर्भुजो दण्डधरश्च हारी ।
चर्म्मासिभृत् सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधोस्तु ॥

इस मन्त्र से बुध का आवाहन और स्थापन करे ।

उत्तरे दीर्घचतुरस्रेऽष्टदले वा षडङ्गुले पीते वामदृष्टिं सूर्याभिमुखं गुरुं पीतपुष्पाक्षतैरावाहयेत् ।

ॐ भूर्भुवः स्वः सिन्धुदेशोद्भव आङ्गिरसगोत्र पीतवर्ण भो गुरो इहागच्छ इहतिष्ठ ॐ बृहस्पतये नमः बृहस्पतिमावाहयामि स्थापयामि ।

बृहस्पत इत्यस्य गृत्समदऋषिः त्रिष्टुप्छन्दः बृहस्पतिर्देवता बृहस्पतिस्थापने विनियोगः ।

---

कार्यारम्भेषु सर्वेषु प्रतिष्ठास्वध्वरेषु च । नववेश्मप्रवेशे च गर्भाधानादिकर्मसु ॥
आरोग्यस्नानसमये संक्रान्तौ रोगसंभवे । अभिचारे च यः कुर्याद् ग्रहपूजां विधानतः ॥
सोऽभीष्टफलमाप्नोति निर्विघ्नेन न संशयः ।

प्रयोगपारिजाते--

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् । वृष्ट्यायुः पुष्टिकामो वा निर्विघ्नेन नसंशयः ।

ॐ भूर्भुवः स्वः बृहस्पते ऽअति यदर्यो ऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छ वंस ऽऋत प्रजातत दस्मासु द्रविणं धेहि चित्रम् ॥

पीताम्बरः पीतवपुः किरीटी चतुर्भुजोदेवगुरुः प्रशान्तः ।
दधाति दण्डं च कमण्डलुं च तथाऽक्षसूत्रं वरदोऽस्तु मह्यम् ॥

इस मन्त्र से बृहस्पति का आवाहन और स्थापन करे ।

पूर्वे पञ्चकोणे नवाङ्गुले श्वेते ऊर्ध्वं दृष्टिं सूर्याभिमुखं शुक्रं श्वेतपुष्पाक्षतैरावाहयेत् ।

ॐ भूर्भुवः स्वः भोजकटदेशोद्भव भार्गवसगोत्र शुक्लवर्ण भो शुक्र इहागच्छ इहतिष्ठ ॐ शुक्राय नमः शुक्रमावाहयामि स्थापयामि ॥

अन्नादित्यस्य अश्विसरस्वत्यतीन्द्राऋषयः अतिजगतीछन्दः शुक्रो देवता शुक्रमावाहने विनियोगः ।

ॐ भूर्भुवः स्वः अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस ऽइन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥

श्वेताम्बरः श्वेतवपुः किरीटी चतुर्भुजोदैत्यगुरुः प्रभावान् ।
तथाऽक्षसूत्रञ्च कमण्डलुञ्च दण्डञ्च विभृद्वरदोऽस्तु मह्यम् ॥

इस मन्त्र से शुक्र का आवाहन और स्थापन करे ।

पश्चिमे धनुराकारे द्व्यङ्गुले कृष्णेऽधोदृष्टिं सूर्याभिमुखं शनिं कृष्णपुष्पाक्षतैरावाहयेत् ॥

ॐ भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यसगोत्र कृष्णवर्ण भो शनैश्चर इहागच्छ इहतिष्ठ ॐ शनैश्चराय[1] नमः शनैश्चरमावाहयामि स्थापयामि ।

शन्न इत्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः शनिर्देवता शनिस्थापने विनियोगः ।

---

१ ग्रहपूजा पदार्थानुसमयेनैव । तत्र सूर्याय भौमाभ्यां रक्तवस्त्रम्, सोमशुक्राभ्यां श्वेतचन्दनम्, बुधगुर्वोः पीतम्, इतरेभ्यः कृष्णम्, सूर्यभौमाभ्यां रक्तचन्दनम्, सोमशुक्राभ्याम् श्वेतचन्दम् । बुधगुरुभ्यां काश्मीरयुक्तचन्दनम् । शनिराहुभ्यां कस्तूरीसहितम्, केतवेऽगुरुसहितम् । अक्षतास्तत्तद्ग्रहवर्णरञ्जिताः । सूर्याय रक्तकरवीरपुष्पम्, सोमाय श्वेतकरवीरपुष्पम्, भौमाय कौसुम्भं पुष्पम्, बुधाय चम्पकपुष्पम्, गुरवे शतपत्रपुष्पम्, शुक्राय जातीपुष्पम्, शनये शमीपत्राणि, राहवेऽगस्त्यपुष्पम् । केतवे विचित्रपुष्पम् । अभावे श्वेतावस्त्रादीनि । एवं अधिदेवादिभ्यस्तित्तद्ग्रहवर्णैः श्वेतैर्वोपचारैः पूजनम् । अन्येषां श्वेतैरेवेति एवं पृथक्करणाशक्तौ सर्वेभ्यः आसनानि समर्पयामीत्यादिप्रयोगः । नववर्तियुतोदीपः ।

ॐ भूर्भुवः स्वः शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः ॥

नीलद्युतिः शूलधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान् ।
चतुर्भुजः सूर्यसुतः प्रशान्तः सदाऽस्तु मह्यं वरमन्दगामी ॥

इस मन्त्र से शनि का आवाहन और स्थापन करे ।

---

रवये गुडौदनं, सोमाय सघृतं पायसम् । भौमाय हविष्यान्नम् । बुधाय षाष्टिकपायसम् । गुरवे दध्योदनम् । शुक्राय घृतौदनम् । शनये तिलमाषमिश्रमन्नम् । राहवे लवणमिश्रक्षीरयुक्तमोदनम् । केतवे आरक्तपिष्टयुतलवणमिश्रिताक्षीरयुततिलतण्डुलमिश्रितौदनम् ।

रवये द्राक्षाफलानि । सोमायेक्षवः । भौमाय पूगानि । बुधाय नारङ्गानि : गुरवे जम्बीराणि । शुक्राय बीजपूराणि । शनये खर्जूरफलानि । राहवे नारिकेराणि केतवे दाडिमानि । अधिदेवताप्रत्यधिदेवतानां चैतदेवोपचाराः । अन्येषां यथा संभवम् ।

वितानम्--

दुकूलपट्टहेमाङ्गं कार्पासं वावितानम् । चतुर्हस्तसमायामं विस्तारं गुणसंयुतम् ।
चतुष्कोणसमेपेतं घण्टारज्जुसमन्वितम् । कोणेषु त्वचतुर्दण्डेर्वेध्वा तद्धारयेद्बुधिः ।
चतुष्करायता दण्डाश्चतुरङ्गुलनाडकाः । अन्तवलयसंयुक्ता वैणवा ग्रन्थिवर्जिताः ।
प्रासादमण्डलपार्श्वेषु तत्पङ्क्तिःसमानकम् । वितानं विस्तृतं तद्बद्धितानमितिकीर्तितम् । ( वीर० मि० लक्ष० प्र० )

नैर्ऋत्ये शूर्पाकारे द्वादशाङ्गुले कृष्णे दक्षिणदृष्टिं सूर्याभिमुखं राहुं कृष्णपुष्पाक्षतैरावाहयामि ।



ॐ भूर्भुवः स्वः राठिनपुरोद्भव पैठीनसी गोत्रः कृष्णवर्णभो राहो इहागच्छ इहतिष्ठ ॐ राहवे नमः राहुमावाहयामि स्थापयामि ।

कयान इत्यस्य वामदेवऋषिः गायत्रीछन्दः राहुदेवता राहुस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः कयानश्चित्रऽआभुवदूती सदावृधः सखा । कयाशचिष्ठयावृता ।

नीलाम्बरो नीलवपुः किरीटी करालवक्त्रः करवालशूली ।

चतुर्भुजश्चर्मधरश्च राहुः सिंहाधिरूढो वरदोऽस्तु मह्यम् ॥

इस मन्त्र से राहु का आवाहन और स्थापन करे ।

वायव्यां ध्वजाकारे षडङ्गुले धूम्रे दक्षिणदृष्टिं सूर्याभिमुखं केतुं धूम्रपुष्पाक्षतैरावाहयामि ।

ॐ भूर्भुवः स्वः केतो इहागच्छ इहतिष्ठ ॐ केतवे नमः केतुमावाहयामि स्थापयामि ।



केतुमित्यस्य मधुच्छन्द ऋषिः गायत्रीछन्दः केतुर्देवता केतुस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे ॥ समुषद्भिरजायथाः ।

धूम्रो द्विबाहुवरदो गदाभृत् गृध्रासनस्थो विकृताननश्च ।

किरीटकेयूरविभूषिताङ्गः सदाऽस्तु केतुर्वरदः प्रशान्तः । इतिग्रहाः ॥

इस मन्त्र से केतु का आवाहन और स्थापन करे ।

अधिदेवतावाहनं शुक्लपुष्पाक्षतैः सूर्यदक्षिणपार्श्वे सूर्यस्य दक्षिणस्यां दिशि ॐ भूर्भुवः स्वः ईश्वर इहागच्छ इहतिष्ठ ॐ ईश्वराय नमः ईश्वरमावाहयामि स्थापयामि ।

त्र्यम्बकमित्यस्य वशिष्ठऋषिः अनुष्टुप्छन्दः त्र्यम्बकरुद्रो देवता रुद्रस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ॥ ऊर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ।

एह्येहि गौरीशपिनाकपाणे शशाङ्कमौले वृषभाधिरूढ ।

देवाधिदेवेशमहेशनित्यं गृहाण पूजां भगवन्नमस्ते ॥

इस मन्त्र से रुद्र का आवाहन और स्थापन करे ।

---

( १ ) केतुनां बहुत्वेऽपि गणत्वेन देवतात्वात्पूजादावेकवचनमेव ।

सोमदक्षिणपार्श्वे ( सोमस्योत्तरदिशि ) ॐ भूर्भुवः स्वः उमे इहागच्छ इहतिष्ठ ॐ उमायै नमः उमामावाहयामि स्थापयामि ।

श्रीश्चतेत्यस्य नारायणपुरुषऋषिः त्रिष्टुप्छन्दः उमादेवता उमास्थापने विनियोगः ।

ॐ भूर्भुवः स्वः श्रीश्चंतेलक्ष्मीश्च पत्न्यांवहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यांत्तम् । इष्णन्निषाणामुम्मंऽइषाण सर्व्वल्लोकम्मंऽईषाण ।

एह्येहि दुर्गे दुरितौघनाशिनी प्रचण्डदैत्यौघविनाशकारिणी ।
उमे महेशार्धशरीरधारिणी स्थिरा भव त्वं मम यज्ञकर्मणि ॥

इस मन्त्र से उमा का आवाहन और स्थापन करे ।

भौमदक्षिक्षपार्श्वे ( पश्चिमदिशि ) ॐ भूर्भुवः स्वः स्कन्द इहागच्छ इहतिष्ठ ॐ स्कन्दाय नमः स्कन्दमावाहयामि स्थापयामि ।

यदक्रन्द इत्यस्य जमदग्निदीर्घतमाऋष(त्रिष्टुप्छन्दः स्कन्दो देवता स्कन्दस्थापने विनियोगः ।

केतुदक्षिणपार्श्वे ( पश्चिमदिशि ) ॐ भूर्भुवः स्वः चित्रगुप्त इहागच्छ इहतिष्ठ ॐ चित्रगुप्ताय नमः चित्रगुप्तमावाहयामि स्थापयामि ।

चित्रेत्यस्य ऋषयो यजुर्जगतीछन्दः चित्रगुप्तो देवता चित्रगुप्तस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः चित्रावसोस्वस्तितें पारमंशीय ।
धर्मराजसभासंस्थं कृताकृतविवेकिनम् ।
गृहाण पूजां मम चित्रगुप्त ममाध्वरं पाहि भगवन्नमस्ते ।

इस मन्त्र से चित्रगुप्त आवाहन और स्थापन करे ।

अथ प्रत्यधिदेवता-ग्रहवामपार्श्वे शुक्लपुष्पैरक्षतैश्च—ॐ भूर्भुवः स्वः अग्ने इहागच्छ इहतिष्ठ

( १ ) अधिदेवताः--अधिष्ठात्री देवता अधिदेवता । अधिष्ठातृत्वं च सन्निधानमात्रेण तत्तत्पदार्थानां तत्तत्कर्मसु नियन्तृत्वरूपम् । तत्र श्रोत्र-त्वक्-नेत्र-रसना-घ्राण-वाक्-हस्त-पाद-पायु-उपस्थ-मनसामेकादशेन्द्रियाणां क्रमेण दिक्-वात-अर्क-वरुण-अश्वि-वह्नि-इन्द्र-उपेन्द्र-मित्र-प्रजापति-चन्द्रा इत्येता अधिष्ठातृदेवताः ।

ॐ अग्नये नमः अग्निमावाहयामि स्थापयामि ।

ॐ अग्निमित्यस्य विरुपाक्षऋषिः गायत्रीछन्दः अग्निर्देवता अग्निस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः अग्निन्दूतंपुरोदधे हव्यवाहमुपब्रुवे । देवाँ २ऽआसादयादिह ।

एह्येहि सूर्यामरहव्यवाह मुनिप्रवर्यैरभितोऽभिजुष्ट ।
तेजोवता लोकगणेन सार्धं ममाध्वरं पाहि भवन्नमस्ते ॥

इस मन्त्र से अग्नि का आवाहन और स्थापन करे ।

चन्द्रवामपार्श्वे ( चन्द्र दक्षिणादिशि ) ॐ भूर्भुवः स्वः आप इहागच्छ इहतिष्ठ अद्भ्यो नमः अप आवाहयामि स्थापयामि ।

आप इत्यस्य सिन्धुद्वीप ऋषिः आपो देवता गायत्रीछन्दः अपां स्थापने विनियोगः ।

---

ग्रहाणां—सूर्य-चन्द्र-भौम-बुध-गुरु-शुक्र-शनि-राहु-केतूनां क्रमेण ईश्वर-उमा-स्कन्द-विष्णु-ब्रह्मा-इन्द्र-यम-काल चित्रगुप्ताः ।

"ईश्वरोमास्कन्दहरिब्रह्मेन्द्रयमकालकाः । चित्रगुप्त इतीमे वै ग्रहाणामधिदेवताः"

"अग्निरापः क्षितिर्विष्णुरिन्द्रऐन्द्री च देवताः । प्रजापतिश्च सर्पाश्च ब्रह्मा प्रत्यधिदेवताः"

ॐ भूर्भुवः स्वः आपोहिष्ठामयो भुवस्तानऽऊर्ज्जेदधातन । महेरणाय चक्षसे ।

समाह्वयाः श्वेतसुपावनेशीरापस्वरूपाप्रबलप्रपन्नाः ।

सुपाशहस्तावरदाअपोऽत्र यजामि देवीः कुलवृद्धिहेतोः ॥

इस मन्त्र से अपका आवाहन और स्थापन करे ।

भौमवामपार्श्वे ( पूर्वदिशि ) ॐ भूर्भुवः स्वः पृथिवी इहागच्छ इहतिष्ठ ॐ पृथिव्यै नमः पृथिवी मावाहयामि स्थापयामि ।

स्योनेत्यस्य मेधातिथिऋषिः गायत्रीछन्दः पृथिवी देवता पृथिवीस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः स्योनापृथिविनोभवानृक्षरानिवेशनि । यच्छानः शर्म्म सप्रथाः ।

इस मन्त्र से पृथिवी का आवाहन और स्थापन करे ।

बुधवामपार्श्वे ( पश्चिमादिशि ) ॐ भूर्भुवः स्वः विष्णो इहागच्छ इहतिष्ठ ॐ विष्णवे नमः विष्णुमावाहयामि स्थापयामि ।

इदं विष्णुरित्यस्य मेधातिथि ऋषिः गायत्रीछन्दः विष्णुर्देवता विष्णुस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः — इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ।

आवाहयेत्तं गरुडोपरिस्थितं रमार्द्धदेहं सुरराजबन्दितम् ।
कंसान्तकं चक्रगदाब्जहस्तं भजामि देवं वसुदेवसूनुम् ॥

इस मन्त्र में विष्णु का आवाहन और स्थापन करे ।

गुरुवामपार्श्वे ( पश्चिमदिशि ) ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इहतिष्ठ ॐ इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि ।

त्रातारमित्यस्य अप्रतिरथऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता इन्द्रस्थापने विनियोगः ।

ॐ त्रातारमिन्द्रमवितारमिन्द्रंहवेहवे सुहवं शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्तिनो मघवा धात्विन्द्रः ।

एह्येहि वृत्रघ्नगजाधिरूढ सहस्रनेत्रात्रिदशैकवन्द्य ।
तेजोवता देवगणेन सार्द्धं ममाध्वरं पाहि भवन्नमस्ते ॥

इस मन्त्र से इन्दुका आवाहन और स्थापन करे ।

शुक्रपार्श्वे ( उत्तरदिशि ) ॐ भूर्भुवः स्वः इन्द्राणि इहागच्छ इहतिष्ठ इन्द्राण्यै नमः इन्द्राणीमावाहयामि स्थापयामि ॥

'अदित्यै' इत्यस्य दध्यङ्ङाथर्वणऋषिः यजुस्त्रिष्टुप्छन्दः-इन्द्राणीदेवता इन्द्राणीस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः-अदित्यै रास्नासीन्द्राण्याऽउष्णीषः । पूषासि घर्म्माय दीष्व ।

एह्येहि देवेश्वरि इन्द्रपत्नि स्वर्गादिदेवेशि सुखाय्यदात्री ।
संवीज्यमानाप्सरसां गणेन गृहाण पूजां वरदन्नमस्ते ॥

इस मन्त्र से इन्द्राणी का आवाहन और स्थापन करे ।

शनिवामपार्श्वे ( दक्षिणदिशि ) ॐ भूर्भुवः स्वः प्रजापते इहागच्छ इहतिष्ठ प्रजापतये नमः प्रजापतिमावाहयामि स्थापयामि ।

प्रजापत इत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छन्दः प्रजापतिर्देवता प्रजापतिस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः-प्रजापते नत्वदेतान्न्यन्यो विश्वारूपाणि परिता बभूव । यत्कामास्ते जुहुम-

स्तन्नोऽअस्तु व्वयᳪ स्याम पतयो रयीणाम् ।

एह्येहि लोकेशपितामहेश हंसाधिरूढस्त्रिदशैकवन्द्य ।
श्वेतोत्पलाभासप्रजापते त्वं गृहाण पूजां भगवन्नमस्ते ॥

इस मन्त्र से प्रजापति का आवाहन और स्थापन करे ।

राहुवामपार्श्वे ( पूर्वदिशि ) ॐ भुर्भुव स्वः सर्पा इहागच्छत इहतिष्ठत ॐ सर्पेभ्यो नमः सर्पानावाहयामि स्थापयामि ॥

नमोऽस्त्वित्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सर्पादेवता सर्पस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः नमोऽस्तु सर्पेभ्यो येके च पृथिवीमनु । येऽअन्तरिक्षे येदिवितेभ्यः सर्पेभ्यो नमः ।

आगच्छतागच्छतसर्पदेवाः संसारभीतिप्रसृजो वरेण्याः ।
धराधरारत्नविभूषिताश्च गृह्णीत पूजां वरदां नमो वः ॥

इस मन्त्र से सर्पो का आवाहन और स्थापन करे ।

केतुवामपार्श्वे ( पूर्वदिशि ) ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छ इहतिष्ठ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि ।

ब्रह्मेत्यस्य प्रजापतिऋषिः त्रिष्टुप्छन्दः ब्रह्मादेवता ब्रह्मस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः ब्रह्मयज्ञानम्प्रथमं पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः । स बुध्न्याऽउपमाऽअस्यविष्ठाः सतश्च योनिमसंतश्च व्विवः ।

एह्येहि लोकेशपितामहेन्द्र हंसाधिरूढस्त्रिदशैकवन्द्य ।
श्वेतोत्पलाभासकशाम्बुहस्त गृहाण पूजां भगवन्नमस्ते ॥

इस मन्त्र से ब्रह्मा का आवाहन और स्थापन करे ।

अथ पञ्चलोकपालाः ( राहोरुत्तरे ) ॐ भूर्भुवः स्वः गणपते इहागच्छ इहतिष्ठ गणपतये नमः गणपतिमावाहयामि स्थापयामि ।

गणानान्त्वेति प्रजापतिऋषिः यजुश्छन्दः गणपतिर्देवता गणपतिस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वां निधिपतिꣳ हवामहे व्वसो मम । आऽहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम् ॥

आवाहयेत्तं गणराजदेवं रक्तोत्पलाभासमशेषवन्द्यम् ।
विघ्नान्तकं विघ्नहरं गणेशं भजामि रौद्रं सहितं च सिद्धिम् ॥

इस मन्त्र से गणपति का आवाहन और स्थापन करे ।

शनेरुत्तरे—ॐ भूर्भुवः स्वः दुर्गे इहागच्छ इहतिष्ठ ॐ दुर्गायै नमः दुर्गामावाहयामि स्थापयामि ।

अम्बेऽम्बिकेत्यस्य प्रजापतिऋषिः अनुष्टुप्छन्दः दुर्गादेवता दुर्गास्थापने विनियोगः ।

ॐ भूर्भुवः स्वः अम्बेऽआम्बिकेऽम्बालिकेनमानयतिकश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पील-वासिनीम् ।

एह्येहि दुर्गेदुरितौघनाशिनी प्रचण्डदैत्यौघविनाशकारिणी ।
उमे महेशार्द्धशरीरधारिणी स्थिरा भव त्वं मम यज्ञकर्मणि ॥

इस मन्त्र से दुर्गा का आवाहन और स्थापन करे ।

सूर्यस्योत्तरे—ॐ भूर्भुवः स्वः वायो इहागच्छ इहतिष्ठ ॐ वायवे नमः वायुमावाहयामि स्थापयामि ।

आन इत्यस्य गृत्समदऋषिः गायत्रीछन्दः वायुर्देवता वायुस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः—आनो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् । वायोऽअस्मिन्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदा नः ।

धूम्राह्वयं गन्धवहं सुरम्यं मृगाधिरूढं त्रिदशैकवन्द्यम् ।
सुपूजकानन्दकरं पुराणं भजामि वायुं स्वकुलाभिवृद्धयै ॥

इस मन्त्र से वायु का आवाहन और स्थापन करे ।

राहोः—ॐ भूर्भुवः स्वः आकाश इहागच्छ इहतिष्ठ ॐ आकाशाय नमः आकाशमावाहयामि स्थापयामि ।

घृतमित्यस्य प्रजापतिऋषिः पङ्क्तिश्छन्दः आकाशोदेवता आकाशस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः—घृतंघृतपावानः पिबतव्वसां व्वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा ।

दिशं॰प्रदिशंऽआदिशोव्विदिशंऽउद्दिशो दिग्भ्यः स्वाहा ।

समाह्वयन्तं गगनं दिवौकसां निवासभूतं सुविनिर्मलञ्च ।
आकाशदेवं रुचिरं पुराणं भजामि नाकं स्वकुलाभिवृद्धयै ॥

इस मन्त्र से आकाश का आवाहन और स्थापन करे ।

केतोः—ॐ भूर्भुवः स्वः अश्विनाविहागच्छतं इहतिष्ठतं ॐ अश्विभ्यां नमः अश्विनौ आवाह-

---

( १ ) पञ्चलोकपालाः—

"विनायकं तथा दुर्गां वायुमाकाशमेव च । आवाहयेद् व्याहृतिभिस्तथैवाश्विकुमारकौ"

प्रयोगदीपे—

अग्न्यादयोदेवत्वेन, शिवादयोऽधिदेवतात्वेन इन्द्र–ब्रह्म–यम-वायु-वरुणः पञ्चलोकपालत्वेनोक्ताः गणेशाद्याः पञ्च गणेशः दुर्गा, लोकपालः–वास्तोष्पति, मरुतः, इति स्वातन्त्र्येण पृथगुक्ताः क्रमश्च-ग्रहाः देवाः, अधिदेवाः, दिक्पालाः, लोकपालाः, गणेशादयः पञ्च, नक्षत्राणि इत्युक्तः । आवाहनोत्तरमीशान्यां कलशं संस्थाप्य तत्र ब्रह्म विष्णु महेशानुदक्संस्थं संस्थाप्य कलशमालभ्य रुद्राध्यायं जप्त्वा सूर्यादीनावाह्य पुष्पान्तं पूजनं कृत्वा संप्रार्थ्य होमं कृत्वा धूपादिना पूजयेदित्युक्तम् ।
लोकपालाः सूर्यादुत्तरतः प्राक्संस्था उदक्संस्था वा स्थापयेत् ।

यामि स्थापयामि ।

यावामित्यस्य मेधातिथि ऋषिः गायत्रीछन्दः अश्विनौ देवता अश्विनौस्थापने विनियोगः ।

ॐ भूर्भुवःस्वः-यावांकशामधुमत्याश्विनासूनृतावती । तयायज्ञं मिमिक्षतम् ॥

आयातमायातमुभौकुमारावश्वीमुनीन्द्रादिकसिद्धसेव्यौ !
गृहीतमेतां मम पूजनीयौ पूजां सुखौघं कुरुतं नमोवाम् ॥

इस मन्त्र से अश्विनीयों का आवाहन और स्थापन करे ।

गुरोरुत्तरे-ॐ भूर्भुवः स्वः क्षेत्रपाल इहागच्छ इहतिष्ठ ॐ क्षेत्रपालाय नमः क्षेत्रपालमावाहयामि स्थापयामि ।

नहिस्पशमित्यस्य विश्वामित्रऋषिः त्रिष्टुपछन्दः क्षेत्राधिपतिर्देवता क्षेत्राधिपतिस्थापने विनियोगः ।

---

( १ ) अत्र रुद्रकल्पद्रुमादौ क्षेत्रपाल वास्तोष्पति, इति क्रमः । संस्कारभास्करादौ तु वास्तोष्पति क्षेत्रपाल इति क्रमः ।

दानमयूखे--

अनयोरावाहनं नोक्तम् । एताः कर्मसाद्गुण्यदेवताः सर्वग्रहणामुक्तरत एषां स्थापनमिति संप्रदाय इति रुद्रकल्पद्रुमादौ शनिसूर्यमण्डलोर्मध्ये एषां स्थापनमिति कुत्रापि नोपलभ्यते ।

ॐ भूर्भुवः स्वः—नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः। एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरंक्षैत्रजित्यायदेवाः ॥

एह्येहि क्षेत्राधिपते सुरेश सुरासुरैर्वन्दितपादपद्म ।
सुतप्तचामीकरभासमान गृहाण पूजां भगवन्नमस्ते ॥

इस मन्त्र से क्षेत्राधिपति का आवाहन और स्थापन करे ।

गुरोरुत्तरे ॐ भूर्भुव स्वः वास्तोष्पते इहागच्छ इहतिष्ठ ॐ वास्तोष्पतये नमः वास्तोष्पतिमावाहयामि स्थापयामि ।

'वास्तोपति' इत्यस्य वशिष्ठऋषिः त्रिष्टुप्छन्दः वास्तोष्पतिर्देवता वास्तोष्पतिस्थापने विनियोगः ।

---

पूर्वादिक्रमेण इन्द्रादिक्रमे इन्द्राद्यष्टलोकपालावाहनम् ब्रह्मानन्तयोरपीति केचित् ।

इन्द्रादिदिक्पालानां वास्तोष्पतेः क्षेत्रपालाधिपतेश्चावाहनं मदनरत्नसंग्रहस्थकारिकामुल्लिख्य संस्कारभास्करे ( आश्व० गृ० प० ) चोक्तम् ।

पञ्चगव्यानि पञ्चामृतानि नवपर्वतधातून् नवपवित्रमृदो नवरत्नानि प्रक्षिप्य दूर्वापल्लवैर्मुखमाच्छाद्य वस्त्रयुग्मेन वेष्टयित्वा समुद्रादीनि तीर्थान्यावाह्य कुम्भमभिमन्त्र्य वारुणी पावमानीश्च जपेत् इति ( आश्वला० गृ० प० २।२।२। ) विशेषः ।

संग्रहे—

ब्रह्माणं चततः स्थाप्य पूवशान्येस्तु मध्यमे । प्रतीचीनैऋतीमध्ये अनन्तं स्थापयेदिति ।

वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशोऽअनमीवोभवानः ।
यत्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥
एह्येहि पातालतलाधिवासिन् वास्तोष्पतेदेवसुधर्ममूर्त्ते ।
गृहाधिदेवेश परेशानित्यं गृहाण पूजां भगवन्नमस्ते ॥

इस मन्त्र से वास्तोस्पति का आवाहन और स्थापन करे ।

ग्रहमण्डलाद्बहिः पूर्वे ॐभूर्भुवः स्वः इन्द्र इहागच्छ इहतिष्ठ ॐ इन्द्राय नमः इन्द्रमावाहयामिस्थापयामि

त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता इन्द्रस्थापने विनियोगः ।

ॐ भूर्भुवः स्वः त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वयामिशक्रंपुरुहूतमिन्द्रंॐ स्वस्तिनोमघवाधात्विन्द्रः ।

एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरामरेश ।
संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥

इस मन्त्र से इन्द्र का आवाहन और स्थापन करे ।

आग्नेयाम् ॐ भूर्भुवः स्वः अग्ने इहागच्छ इहतिष्ठ ॐ अग्नये नमः अग्निमावाहयामि स्थापयामि ।

त्वन्नोऽअग्ने इत्यस्य हिरिण्यस्तूपाङ्गिरसौ ऋषीत्रिष्टुपछन्दः अग्निर्देवता अग्निस्थापने विनियोगः ।

ॐ त्वन्नोऽअग्ने तवदेवपायुभिर्म्मघोनोरक्ष तन्वश्चव्वन्द्य । त्रातातोकस्य तनये गवांमस्य निमेषं रक्षमाणस्तवव्रते ।

एह्येहि सर्वामरहव्यवाहमुनिप्रवर्यैरभितोऽभिजुष्ट ।
तेजोवतालोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते ॥

इस मन्त्र से अग्निदेवता का आवाहन और स्थापन करे ।

दक्षिणे ॐ भूर्भुवः स्वः यम इहागच्छ इहतिष्ठ ॐ यमाय नमः यममावाहयामि स्थापयामि ।

यमायत्वेत्यस्य दध्यङ्ङाथर्वणऋषिः त्रिष्टुपछन्दः यमो देवता यमस्थापने विनियोगः ।

ॐ यमायत्वाङ्गिरस्वतेपितृमते स्वाहा । स्वाहाघर्माय स्वाहा घर्मः पित्रे ।

एह्येहि वैवस्वतधर्मराज सर्वामरैरर्चितधर्ममूर्त्ते ।

शुभाशुभानन्द शुचामधीश शिवाय नः पाहि मखं नमस्ते ॥

इस मन्त्र से यम का आवाहन और स्थापन करे ।

नैर्ऋत्यां ॐ भूर्भुवः स्वः निऋते इहागच्छ इहतिष्ठ ॐ निऋतये नमः निर्ऋतिमावाहयामि स्थापयामि ।

"असुन्वन्त" इत्यस्य प्रजापतिऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता निऋतिस्थापने विनियोगः ।

ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य । अन्न्यमस्मदिच्छसातऽइत्यानमो देविनिऋते तुभ्यमस्तु ।

एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसङ्घैः ।
ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥

इस मन्त्र से निर्ऋति आवाहन और स्थापन करे ।

पश्चिमे ॐ भूर्भुवः स्वः वरुण इहागच्छ इहतिष्ठ वरुणाय नमः वरुणमावाहयामि स्थापयामि ।

तत्वायामीत्यस्य शुनः शेप ऋषिः त्रिष्टुप्छन्दः वरुणोदेवता वरुणस्थापने विनियोगः ।

ॐ तत्वांयामि ब्रह्मणाव्वन्दमानस्तदाशास्ते यजमानो नो हविर्भिः । अहेडमानो व्वरुणेहवो-
ध्युरुशꣳस समानऽआयुः प्रमोषीः ।

एह्येहि यादोगणवारिधीनां गणेशपर्जन्यसहाप्सरोभिः ।
विद्याधरेन्द्रामरगीयमान पाहित्वमस्मान् भगवन्नमस्ते ॥

इस मन्त्र से वरुण का आवाहन और स्थापन करे ।

वायव्यां ॐ भूर्भुवः स्वः वायो इहागच्छ इहतिष्ठ ॐ वायवे नमः वायुमावाहयामि स्थापयामि ।

आनइत्यस्य वसिष्ठऋषिः त्रिष्टुब्छन्दः वायुर्देवता वायुस्थापने विनियोगः ।

ॐ आनो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहियज्ञम् । व्वायोऽअस्मिन्नसवनेमादय-
स्वयूयम्पातस्वस्तिभिः सदा नः ।

एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सहसिद्धसङ्घैः ।
प्राणाधिपः को कवेः सहाय गृहाण पूजां भगवन्नमस्ते ॥

इस मन्त्र से वायु का आवाहन और स्थापन करे ।

उत्तरे ॐ भूर्भुवः स्वः सोम इहागच्छ इहतिष्ठ ॐ सोमाय नमः सोममावाहयामि स्थापयामि ।

वयर्ठ सोमेत्यस्य बन्धुऋषिः गायत्रीछन्दः सोमोदेवता सोमस्थापने विनियोगः ।

ॐ व्वयर्ठ सोमव्रते तवमनंस्तनूषुविभ्रंतः । प्रजावन्तः सचेमहि ।

एह्येहि यज्ञेश्वरयज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् ।

सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥

इस मन्त्र से सोम का आवाहन और स्थापन करे ।

ईशान्यां ॐ भूर्भुवः स्वः ईशान इहागच्छ इहतिष्ठ ॐ ईशानाय नमः; ईशानमावाहयामि स्थापयामि ।

तमीशानइत्यस्य गौतमऋषिः जगतीछन्दः सोमोदेवता सोमस्थापने विनियोगः ।

ॐ तमीशानं जगतस्तस्थुषस्पतिंन्धियञ्जिन्वमवसे हूमहे व्वयम् । पूषानो यथा व्वेदंसा मसद्वृधे रंक्षितापायुरदंब्धः स्वस्तये ।

एह्येहि विश्वेश्वरनस्त्रिशूलकपालखट्वाङ्गधरेणसार्द्धम् ।
लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥

इस मन्त्र से ईशान का आवाहन और स्थापन करे ।

पूर्वेशानयोर्मध्ये ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छ इहतिष्ठ ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि ।

ब्रह्मयज्ञानमित्यस्य प्रगाथऋषिः त्रिष्टुप्छन्दः ब्रह्मदेवता ब्रह्मस्थापने विनियोगः ।

ॐ ब्रह्म यज्ञानं प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः । सबुध्न्याऽउपमाऽअस्यव्विष्ठाः सतश्च योनिमसतश्चव्विवः ॥

एह्येहि सर्वाधिपेत सुरेन्द्र लोकेन सार्द्धं पितृदेवताभिः ।
सर्वस्य धातास्यमितः प्रभावो विशाध्वरं नः सततं शिवाय ॥

इस मन्त्र से ब्रह्मा का आवाहन और स्थापन करे ।

पश्चिमनैर्ऋतमध्ये ॐभूर्भुवः स्वः अनन्त इहागच्छ इहतिष्ठ ॐ अनन्ताय नमः अनन्तमावाहयामि स्थापयामि ।

नमोस्तु-इत्यस्य मेधातिथिऋषिः गायत्रीछन्दः अनन्तो देवता अनन्तस्थापने विनियोगः ।

एह्येहि पातालधरामरेन्द्र नागाङ्गनाकिन्नरगीयमान ।
यक्षोरगेन्द्रामरलोकसङ्घैरनन्तरक्षाध्वरमस्मदीयम् ॥

इस मन्त्र से अनन्त का आवाहन और स्थापन कर ।

ॐ मनोजूतिर्जुषतामाज्ज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु। विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ । ॐ सूर्याद्यनन्ता सुप्रतिष्ठताः वरदाः भवन्तु ।

इससे ध्यान करे—

बृहस्पतिं दैत्यगुरुं महीसुतं, शनैश्चरं चन्द्रसुतं च राहुम् ।
दिवाकरं चन्द्रमसं सुकेतुं स्वकीयचित्ते बहुचिन्तयामि ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः, ध्यानं निवेदयामि ।

इससे आवाहन करे—

समस्तप्रत्यूहसमुच्चयस्य, विनाशने प्राप्तगुणाः सुभव्याः ।
आवाहनं वो वितनोमि देवाः भवन्तु कल्याणकरा भवन्तः ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः, आह्वानं करोमि।

इससे आसन देवे—

रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशं, वैदूर्यरत्ननिकरैरभिभासितं तम् ।
पीठं सदा सदमरैः प्रियमाहृतं च, साङ्गानवग्रहवराः सततं भजन्तु ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः, आसनार्थे अक्षतान् समर्पयामि ॥

इससे पाद्य देवे—

कस्तूरिकासुरभिचन्दनमोदयुक्तमेलालवङ्गघनसारसुवासितं च ।
पाद्यं ददामि जगदेकनिवासदेवाः, साङ्गानवग्रहवराः ! प्रतिमानयन्तु ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः पादयोः पाद्यं समर्पयामि ।

इससे अर्घ देवे—

सौजन्यसौख्यजननी जननीजनानां, येषां कृपैव वसुधावसुधारिणी वै ।
ते सर्वदेवगुरुगौरवधारिदेहा, अर्घ्यं सदैव हि ग्रहा मम धारयन्तु ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः हस्तयोरर्घ्यं समर्पयामि ।

इससे आचमनी देवे—

कङ्कोलपत्त्रहरिचन्दनपुष्पयुक्तं, एलालवङ्गलवलीघनसारसारम् ।

दत्तं सदैव हृदये करुणाशयेऽस्मिन्, देवा! भजन्तु शुभमाचमनीयमम्भः ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः अर्घाङ्गमाचमनीयं समर्पयापि ।

इससे मधुपर्क देवे—

अधिकमानयुतः प्रियकारकः, स मधुपर्क इतः समुपास्थितः ।
सुविहितस्य तथास्य सुरप्रियाः, कुरुत स्वीकरणं नवसङ्ख्यकाः ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः मधुपर्कं समर्पयामि ।

इससे जल देवे ।

जले समादाय विचित्रपुष्पाण्यर्घ्याणिचानीय निपातितानि ।
स्नानं विधेयं विबुधाः समन्तादागत्य युष्माभिरिहाङ्गणे मे ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्य नवग्रहेभ्यो नमः मधुपर्कान्ते आचमनीयं जलं समर्पयामि ।

इससे रक्तचूर्ण देवे ।

धूपादिकेनातिसुवासिनं तथा, शोणश्रियानन्दाविवर्धितेन च ।
श्रीरक्तचूर्णं मलतापहारकं नवग्रहा वो मनसार्पयामि ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः रक्तचूर्णं समर्पयामि ।

इससे धूप देवे—

लवङ्गपाटीरजचूर्णवर्धितं, नरासुराणामपि सौख्यदायकम् ।
लोकत्रये गन्धचयप्रसारकं, गृह्णन्तु धूपं गुरुकं नवग्रहाः ! ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः धूपमाघ्रापयामि । हस्तप्रक्षालनम् ।

इससे दीप देवे—

सद्वर्तिकां ज्ञानविवर्धिकामिमां, निपात्य दीपे विनिवेदितां तथा ।
प्रज्वालितं ध्वान्तविनाशकारकं, गृह्णन्तु ज्ञानस्य विशालरूपकम् ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः दीपं दर्शयामि।

इससे नैवेद्य दे—

सिद्धान्तकर्पूरविराजितं पुरः, सौरभ्यसान्द्रेण विवर्धितं तथा ।
नैवेद्यमेतद्रुचिरं सुगन्धितं, स्वीकृत्य मामत्र कृतार्थयन्तु वै ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः नैवेद्यं निवेदयामि ।

इससे ताम्बूलादि देवे—

दिव्याग्रहा ! नवसमेत्य गृहे मदीये भक्त्यार्पितं परमगन्धयुतं सुरम्यम् ।
एलालवङ्गबहुलं क्रमकादियुक्तं, ताम्बूलमद्य मम गृह्णत हे सुरेन्द्राः ! ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः ताम्बूलपत्रं पूगफलञ्च समर्पयामि ।

इससे दक्षिणा देवे--

देवासुरैर्नित्यमशेषकाले, प्रगीयमानाः प्रभवः ! पुराणाः ।
गृह्णन्तु सद्यः खलु दक्षिणां च, ध्यानेन भक्ते मयि वर्तितव्यम् ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः दक्षिणा-द्रव्यं समर्पयामि ।

इससे नीराजन करे--

नीराजना सौख्यप्रदा सदैव, गाढान्धकारादपि दूरकर्त्री ।
अशेषपापैः परिपूरितस्य, शुद्धिं करोति प्रियमानवस्य ॥

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः नीराजनं समर्पयामि ।

इससे पुष्पाञ्जलि देवे--

पुष्पाञ्जलिं सकलदिव्यग्रहा ! मदीयं भक्त्यार्पितं मधुरगन्धयुतं ससारम् ।
दीने विधाय करुणां मयि हे सुरेन्द्राः ! स्वीकृत्य दीनजनवत्सलतां किरन्तु ॥
ब्रह्मामुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकरा भवन्तु ॥

ॐ ग्रहाऽऊर्ज्जाहुतयो व्यन्तो विप्राय मतिम् । तेषां विशिं प्रियाणां वोहमिष मूर्जꣳ समग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टं गृह्णाम्येषते योनिरिन्द्रायत्वाजुष्टतमम् ।

ॐ भूर्भुवः स्वः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः नवग्रहेभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ।

इससे स्तुति करे ।

भानुः, शशी, धरणिजः सबुधो गुरुश्च, शुक्रस्तथादिवसनायकसूनुरेषः ।
राहुः सदैव जगतां सुहितः सकेतुरेते ग्रहाः शिवकराः सततं भवन्तु ॥

"यत्कृतं पूजनं देव भक्तिश्रद्धा विवर्जितम् ।
परिगृह्णन्तु तत्सर्वं सूर्याद्याग्रहनायकाः ॥ १ ॥
आदित्यादि ग्रहाः सर्वे नानावर्णाः पृथग्विधाः ।
सुप्रसन्नाः प्रयच्छन्तु सौभाग्यं मम सर्वदा" इति ॥

ततः—

"आयुर्विद्यां धनं सौख्यं यशः शौर्यं च पुष्कलम् ।
पुत्रान्दत्तं धनं दत्तं सर्वान्कामांश्च दत्त मे ॥ १ ॥

इति प्रार्थ्य—

ततो ग्रहवेदीशाने कलशं संस्थाप्य तत्र वरुणं
ॐ असंख्याता सहस्राणिये रुद्राऽअधि भूम्यांम् ।
तेषांꣳसहस्रयो जने बधन्वा नितन्मसि ॥ इति संपूज्य ।

तत्रैकऋत्विक् कुम्भं स्पृष्ट्वा साङ्गं रुद्रं जपेत । ततो मण्डलोपरि पञ्चवर्ण वितानं बध्वा इदं पुष्पमालोपशोभितं वितानं बृहस्पतिदैवतं आदित्यादिग्रहेभ्यो नममेत्युत्सृजेत् ।

ततोऽग्नेर्दक्षिणतो[1] ब्रह्मणः स्थापनार्थमेकम्, अग्नेरुत्तरतः प्रणीताप्रणयनार्थं द्वितीयम्, तत्पश्चात् प्रणीतासंस्कारार्थं तृतीयमासनं प्रागग्रकुशद्वयेन ( त्रयेण ) न्यस्य पात्रासादनार्थमुत्तरतः प्रागग्रान् कुशान् न्यसेत् । ततः पञ्चाशत्कुशनिर्मितं[2] प्रदक्षिणग्रन्थिकं ब्रह्माणमग्नेः पुरस्तात्पश्चाद्वाऽऽनीयाग्नेर्दक्षिणे पीठादौ प्रागग्रास्तीर्णेषु दर्भेषु स्थापयेत् ।

---

( १ ) "आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतम् । हस्तमात्रं चतुःशक्ति मूलदण्डसमन्वितम् ॥
ब्रह्माऽऽचार्यप्रणीतानामासनं च त्रिभिः कुशैः । न द्वाभ्यां नैकदर्भेण ऋषयो बहवो विदुः ॥
उत्तरे सर्वपात्राणि उत्तरे सर्वदेवताः । उत्तरेऽपां प्रणयनं किमर्थं ब्रह्मदक्षिणे ॥
यमो वैवस्वतो राजा कुरुते दक्षिणादिशि । तस्य संरक्षणार्थाय ब्रह्मा तिष्ठति दक्षिणे ॥

( २ ) प्रत्यक्षब्रह्मणोऽभावे—
"पञ्चाशत्कुशको ब्रह्मा तदर्धेन तु विष्टरः । दक्षिणावर्तको ब्रह्मा वामावर्तस्तुविष्टर ।

अथवा वृतं ब्राह्मणमेव अग्नेः पूर्वतः पश्चिमतो वा गमयित्वा—"यावत्कर्म समाप्यते तावत्त्वं ब्रह्मा भव" इति पठित्वा तत्रोपवेशयेत्। "भवामि" इति ब्राह्मणः प्रत्युक्तिः। ब्रह्मा वाग्यतश्च भवेत् ततः प्रणीतापात्रं सव्यहस्ते धृत्वा दक्षिणहस्तगृहीतेनोदकपात्रेण तत्र जलं संपूर्य पश्चादास्तीर्णकुशेषु दक्षिणहस्तेन निधाय (कुशैराच्छाद्य) तत्पात्रम्[3]आलभ्य ब्रह्मणोमुखमवलोक्य ईशानमात्रेण ब्रह्मणाऽनुज्ञातः उत्तरत आस्तीर्णेषु कुशेषु निदध्यात् (पायसहोमे पात्रान्तरे पयः कृत्वा तदपि प्रणयेत) ततो द्वादशानां परिस्तरण[4]कुशानां चतुरो भागान् वामहस्ते कृत्वा एकैकभागेन अग्नेः पुरस्तादुदगग्रं दक्षिणतः

---

ऊर्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः।

ऊर्ध्वानि केशाग्राणि निर्माणकाले यस्य स ऊर्ध्वकेशः। लम्बमानान्यधोमुखानि अग्राणि निर्माणकाले यस्य स लम्बकोशः।

संग्रहे तु—

"यज्ञवास्तुनि मुष्टौ च स्तम्बेदर्भवटौ तथा। दर्भसंख्या न विहिता विष्टरास्तरणेषु च॥

(३) आलम्भश्च पात्रस्यैव नोदस्येति। कर्काचार्याः (का० श्रौ० २।३।१)

(४) वहिस्तु परित्यज्य द्वादशाङ्गुलतो परिस्तरणदर्भास्तु बहिः। षोडश द्वादशापि वा।

प्रागग्रम्, पश्चादुदगग्रम्, उत्तरतः प्रागग्रं स्तृणीयात् । ततः उत्तरतः स्तीर्णकुशेषु द्विशः पात्राणि यथा सम्भवं न्युब्जानि उदक्संस्थानि प्राक्संस्थानि वा सादयेत् पवित्रे १ छेदनकुशाः २ प्रोक्षणीपात्रम् ३ आज्यस्थाली ४ चरुस्थाली ५ संमार्जनकुशाः ६ उपयमनकुशाः ७ समिधस्तिस्रः ८ स्रुवः ९ आज्यम्[1] १० तण्डुलाः ११ पूर्णपात्रम्[2] १२। इति । उपकल्पनीयानि तत्तग्रद्‌हवस्त्राणि १। अधिदेवाद्यर्थं,

(१) "घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम्" इति (त्रि० म०)

(२) पूर्णपात्रमिति—

तच्च पराध्र्यमपराध्र्यञ्चेति द्विविधम् । षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमितं पराध्र्यम् ॥

तदुक्तं यज्ञपार्श्वे—

अष्टमुष्टिर्भवेत्किञ्चित्किञ्चिदष्टौ च पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं तदुच्यते ॥ इति ॥

बहुभोक्तृपुरुषाहारपरिमितमपराध्र्यम् । पुरश्चर्यार्णवे

"द्वात्रिंशत्पलमानेन निर्मितं ताम्रपात्रकम् ।

तण्डुलैस्तत्समापूर्य सहिरण्यं सदक्षिणम् । दद्याद्विप्राय तत्तुष्ट्यै पूर्णपात्रमितीरितम्" इति ।

छन्दोग्यपरिशिष्टे—

ब्रह्मणे दक्षिणा देया सा यत्र परिकीर्तिता । कर्मान्ते अनुच्यमानायां पूर्णपात्रादिकं भवेत्" ॥ इति च ।

श्वेतानि च २ तत्तद्ग्रहचन्दनानि ३ अक्षतास्तत्तद्ग्रहवर्णाः, तत्तद्ग्रहपुष्पाणि, तत्तद्ग्रहधूपाः, तत्त-

कंस वा चमसं वान्नस्य पूरयित्वा कृतस्य वा ऽकृतस्यापि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते ( गो० गृ० १.९.७ )

"यावता बहुभोक्तुस्तु तृप्तिः पूर्णा न जायते । नावराध्यं ततः कुर्यात्पूर्णपात्रमिति स्थितिः"

"पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा ( गो० गृ० १।९।११ )

"पूर्णपात्रस्तु दक्षिणेत्येके" आप. गृ. ३।७।१९। पात्रशब्द उभयलिङ्गः । धान्यमुष्टिशतस्य पूर्णपात्रम् ।

"सहैष यज्ञऽउवाच नग्नताया वै बिभेमीति कातेऽनग्नतेत्यभिमतऽएव मा परिस्तृणीयुरिति ( श० ब्रा० १।७।३।२८ )

दशाङ्गुलप्रमाणेन परिस्तीर्य कुशान् क्रमेत् । त्रिभिश्चैव चतुर्भिश्च पञ्चभिः षड्भिरङ्गुलैः ।

सेचनं परिधिश्चैव स्तरणं पूजनं तथा । पश्चादुत्तरतो वा स्यात् पात्रासादनमग्नितः ॥

उत्तरेचेदुदक् संस्थं प्राक्संस्थं पश्चिमे भवेत् । प्राग्बिलान्युदगग्राणि प्राक् संस्थान्यग्नितो भवेत् ।

प्रागग्रोदग्निबलान्यग्नेरुदक् संस्थानि चैव हि" ॥ इति ॥

प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः । तत्तदासादयेद् द्रव्यं यद्यथाविनियुज्यते ।

इति छन्दोग्यपरिशिष्टे कात्यायनोक्तेरग्नेरुदक् प्राक्संस्थमप्यासादनं कर्तुं शक्यते । अत्र यद्यथा विनियुज्यते । इति वचनात् कार्य-क्रमेण पात्रासादनमिति कर्काचार्यादयः सर्वे । यस्य यस्य पात्रस्य येन येन क्रमेण उपयोगो भवति तेन तेन क्रमेणासादनं कार्यक्रमेणासादनं । यस्य पात्रस्य येन क्रमेण आदानं क्रियते तेन क्रमेणासादनमादानक्रमेणासादनमित्युच्यते । अद्यत्वे कार्यक्रमेणैव पात्रासादनं क्रियते याज्ञिकैः । आदानक्रमेणासादने तु आज्यस्थाल्यानन्तरमिति ।

दुग्रहनैवेद्यानि, फलानि, दक्षिणाः, वितानम्, अर्कादिसमिधः, सपवित्रतिलाः पूर्णाहुत्यर्थं नारिकेल-वस्त्रादि, ततः पवित्रकरणम्[1]। तद्यथा—आसादितं कुशपत्रद्वयं स्थौल्येन समं मध्यशल्यरहितं वामहस्ते कृत्वा अग्रतः प्रादेशमात्रं परिमाय मूले तयोरुपरि कुशत्रयमुदगग्रं निधाय तत्कुशत्रयं तयोर्मूलभागेन प्रादक्षिण्येन परिवेष्ट्य तयोः प्रादेशपरिमाणमग्रभागं वामहस्ते कृत्वा अवशिष्टं मूलभागं कुशत्रयं च दक्षिणे हस्ते धृत्वा दक्षिणहस्तेन त्रोटयेत् परित्यजेच्च शिष्टं पत्रद्वयं पवित्रम् तस्मिन् पत्रद्वयेऽविश्लेषाय ग्रन्थिं कुर्यात्। ततः प्रागग्रं प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र सपवित्रेण पात्रान्तरेण हस्तेन वा प्रणीतोदकं त्रिरासिच्य प्रोक्षणीपात्रं सव्यहस्ते कृत्वा दक्षिणेन वामहस्तधृतमेव कर्णसमुत्थाप्य नीचैः

(१) आचार्यः कुशपत्रद्वयं वामहस्ते कृत्वाऽग्रतः प्रादेशमात्रं परिमाय मूले तयोरुपरि कुशत्रयमुदगग्रं निधाय तत्कुशत्रयं तयोर्मूलभागेन प्रादक्षिण्येन परिवेष्ट्य तयोः प्रादेशमानमग्रभागं वामहस्ते कृत्वाऽवशिष्टं मूलभागं कुशत्रयं च दक्षिणहस्ते धृत्वा दक्षिणहस्तेन त्रोटयेत् परित्यजेच्चावशिष्टं पत्रद्वयं पवित्रसंज्ञकं भवति। इदमेव पवित्रकरणमित्युच्यते।

कृत्वा प्रणीतोदकेन पवित्रानीतेनोत्तानहस्तेन प्रोक्षणीः प्रोक्षेत् ततः प्रोक्षणीजलेन आज्यस्थालीं, चरुस्थालीम्, संमार्जनकुशान्, उपयमनकुशान्, समिधः, स्रुवः, आज्यम्, पूर्णपात्रं च पृथक् पृथक् प्रोक्षेत्। ततस्ते पवित्रे प्रोक्षणीपात्रे संस्थाप्य प्रोक्षणीपात्रमग्निप्रणीतयोर्मध्ये निदध्यात्।

ततोऽग्नेः पश्चादाज्यस्थालीं निधाय तत्राज्यं प्रक्षिपेत् एवं चरुस्थालीमग्नेः पश्चिमतो निधाय तत्र सपवित्राभ्यां त्रिः प्रक्षालितां स्तण्डुलान् प्रक्षिप्य, ब्रह्मप्रणीतोदकमासिच्योपयुक्तं जलं तत्र निनीय

---

(१) अयं प्रोक्षणीसंस्कारः "हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति। सवितुर्व इति ताः स्थानं तयोः सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति (का० श्रौ० २।३।३२) इति सूत्रैर्लभ्यते। अत्र प्रोक्षण्युदकस्य पवित्राभ्यामुच्छालनमिति केचित्।

प्रोक्षणीपात्रमेव स्वहस्तस्थं दक्षिणेनोर्ध्वं कुर्यादिति कर्कदेवयाज्ञिकादयः सर्वे। अत्र उदिङ्गनमिति दकारद्वयपाठः प्रामादिकः। उत्पूर्वस्य इणो रूपमेतत्।

उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम्।
"असक्तवरः प्रणीताग्न्योरन्तरेणप्रकीर्तितः।
"वह्नेरुत्तरत" स्थाप्या प्रणीता प्रोक्षणी तथा। उभयोरपि कर्तव्यमन्तरं द्वादशाङ्गुलम्॥

दक्षिण दक्षिणत आज्यम्, आचार्य उत्तरतश्चरुमदग्धमस्त्रावितमण्डमत्तरूष्मपक्कं सुशृतं पचेत् (केवलाज्ये तु उत्तराश्रितामाज्यस्थालीमग्नावारोहयेत् ) ततोऽग्नेर्ज्वलदुल्मुकमादाय ईशानादिप्रदक्षिणमीशानपर्यन्त-मग्निमाज्यचर्वोः परितं भ्रामयित्वोल्मुकमग्नौ प्रक्षिप्य अप्रदक्षिणं हस्तमीशानकोणपर्यन्तं पर्यावर्तयेत् अर्द्धश्रिते चरौ स्रुवं गृहीत्वाऽधोबिलं सकृत् प्रतप्य संमार्जनकुशानामग्रैरन्तरतः उपरि मूलादारभ्याग्र-पर्यन्तं प्राञ्चं संमृज्य कुशमूलैर्बहिरधः प्रदेशे अग्रादारभ्य मूलपर्यन्तं प्रतयञ्चं संमृज्य सम्मार्जनकुशानग्नौ प्रक्षिप्य प्रणीतो ( प्रोक्षण्यु ) दकेन स्रुवमभ्युक्ष्य पुनः स्रुवं प्रतप्य दक्षिणस्यां दक्षिणत स्थापयेत ततः शृतं चरुं स्रुवेण गृहीतेनाज्येनाभिधार्य आज्यस्थालीं चरोः पूर्वेणानीयोत्तरत उद्वास्याग्नेः पश्चिमतः स्थापयेत् ततश्चरुमादाय उत्तरत उद्वास्य आज्यस्य पूर्वेणानीय आज्यस्योत्तरतः स्थापयेत्। ( ततः चरुमभिधार्य ) ततो दक्षिणहस्तस्याङ्गुष्ठानामिकाभ्यां पवित्रयोर्मूलं संगृह्य वामहस्तस्याङ्गुष्ठाना-मिकाभ्यां तयोरग्रं सङ्गृह्य ऊर्ध्वाग्रेऽनम्रीकृत्य धारयन्नेवाज्य प्रक्षिप्याज्यस्योत्पवनं कुर्यादुच्छालयेत् ।

तत आज्यमवेक्ष्य सत्यपद्रव्यं तन्निरस्येत् । ततः पूर्ववत्पवित्रे गृहीत्वा प्रोक्षणीनामपामुत्पवनं

कुर्यात् ततो वामहस्ते पञ्चविंशतिकुशनिर्मितमुपयनमादाय दक्षिणेन प्रादेशमात्रीः पालाशी स्तिस्रः समिधो घृताक्ता द्व्यङ्गुलादूर्ध्वं मध्यमानामिकाङ्गुष्ठैर्मूलभागे धृतास्तर्जन्याग्रवत् स्थूलास्तन्त्रेणाग्नौ तूष्णीं प्रक्षिप्य सपवित्रेण प्रोक्षण्युदकेन चुलुकगृहीतेन ईशानादिप्रदक्षिणमीशानकोणपर्यन्तं पर्युक्ष्य अप्रदक्षिणमीशानकोणपर्यन्तं हस्तं पर्यावर्तयेत् । ततः पवित्रे प्रणीतासु निधाय दक्षिणं जान्वाच्य ब्रह्मणा कुशैरन्वारब्धः उपयमनकुशसहितं प्रसारिताङ्गुलिहस्तं हृदि निधाय दक्षिणहस्तेन मूले चतुरङ्गुलं त्यक्त्वा शङ्खसन्निभमुद्रया स्रुवं गृहीत्वा समिद्धतमेऽग्नौ वायव्यकोणादारभ्याग्निकोणपर्यन्तं प्राञ्चं वा सन्ततघृतधारया मनसा प्रजापतिं ध्यायन् स्रुवेण तूष्णीं सशेषं मौनी जुहुयात् । नात्र स्वाहाकारः । इदं प्रजापतये नमम इति यजमानेन त्यागः कर्तव्यः । होमत्यागानन्तरं स्रुवावशिष्टस्याज्यस्य सर्वत्र प्रोक्षणीपात्रे प्रक्षेपः कार्यः, ततो निर्ऋतिकोणादारभ्य ईशानकोणपर्यन्तं प्राञ्चं वा ॐ इन्द्राय स्वाहा इति जुहुयात् "इदमिन्द्राय नमम" इति त्यजेत् । तत उत्तरपूर्वार्द्धे—ॐ "अग्नये स्वाहा" इदमग्नये नमम इति हुत्वा दक्षिणपूर्वार्द्धे—ॐ सोमाय स्वाहा इदं सोमाय नमम इति जुहुयात् ।

सूर्यादिग्रहाणामधिदेवताप्रत्यधिदेवतागणपत्यादिपञ्चलोकपालवास्तोष्पतिक्षेत्रपालादीनां दश-दिक्पालानां च तिलादिद्रव्यैः अष्टोत्तरशतं, अष्टाविंशति, अष्टौ वा जुहुयात् ।

(२) शाकल्यम्--तिलास्तु द्विगुणाः प्रोक्ता यवेभ्यश्चैव सर्वदा ।
अन्ये सौगन्धिकाः स्निग्धा गुग्गुलाद्याः यवैः समाः । आयुः क्षयो यवाधिक्ये यवसाम्ये धनक्षयः ॥
सर्वकामसमृद्ध्यर्थं तिलाधिक्यं सदैव हि । "तिलाधिक्ये भवेल्लक्ष्मीर्यवाधिक्ये दरिद्रता" ॥
"पञ्चभागास्तिलाः प्रोक्तास्त्रिभागो यव एव च । द्वौ भागौ तण्डुलस्योक्तौ भागैकं गुग्गुलादिकम् ॥
रुद्रभागैः कृते होमे जायते सिद्धिरुत्तमा" । "तिलाः कृष्णा घृतैर्युक्ताः किंचिद्यवसमन्विताः । (शा० र०)
"तिलार्द्धं तु यवाः प्रोक्तास्तदर्भ तण्डुलाः स्मृताः । तदर्धं शर्करा प्रोक्ता आज्यं भागचतुष्टयम्" ॥
"वेदभागस्तिलानां स्युर्भागोनास्तु यवाः स्मृताः । द्विभागं च घृतं प्रोक्तं भागमेकं च तण्डुलाः" । यवार्द्धं तण्डुलाः प्रोक्तास्तण्डुलार्द्धं तिलास्तथा" इति यवाद्याधिक्यविधानं बहुवचनविरुद्धम् ।

(३) समिधः स्वाहाकारान्तैः स्थापनमन्त्रैर्जुहुयुः । ताश्च द्व्यङ्गुलादूर्ध्वं मध्यमानामिकाङ्गुष्ठमूलभागे घृतामधुसर्पियुक्ता दधिदुग्धाक्ता वा होतव्याः । ताश्च अर्कः पलाश इत्याद्या । सर्वाः प्रादेशमात्र्यस्तर्जन्यग्रवत्स्थूला । दूर्वात्रयस्यैकाऽऽहुतिः । त्रिशाखकुशस्य चैका । तासां संख्या—एकैकं ग्रहं प्रति अष्टोत्तरसहस्रम्, अष्टोत्तरशतम् । अष्टाविंशतिः, अष्टौ वा इयमेव संख्या सयवतिलानामाज्यस्य चरोश्चेति प्रतिष्ठा-मयूखे प्रयोगदीपे तु एकैका च घृताहुतिः । एकैका च चरोस्तथा, इति कारिकावचनादाज्यचर्वोरेकैकाहुतिहोतव्या, समिदाज्यचरुणां

अस्मिन् कर्मणि इमानि उपकल्पितानि हवनीयद्रव्याणि विहितसङ्ख्याहुतिपर्याप्तानि या या य-
क्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मयापरित्यक्तानि नमम । यथा देवतमस्तु ।

**अथ गणपति-अम्बिका-नवग्रह-अधिदेवता–प्रत्यधिदेवता–पञ्च लोकपालानां होमः—**

ॐ गणानान्त्वा गणपतिᳪ हवामहे प्रियाणान्त्वा प्रियपतिᳪ हवामहे निधीनान्त्वा निधिपतिᳪ

---

होमस्तिलयवैः क्रमात् । इति सयवतिलहोम उक्तः संख्या तु तिलहोमस्य नोक्ता अतस्तिलहोमे स्वेच्छया संख्यात्युक्तम् ! तिलहोमो-व्याहृतिभिः व्यस्तसमस्ताभिरुक्तः । अधिदेवादीनां तु होमो न कार्यः शौनकेनानुक्तत्वादिति च तत्रैवोक्तम्, तत्तच्छाखापरम् । अस्म-च्छाखीयैस्तु मयूखोक्तासंख्याऽऽद्रियते सा चैवम् ।

( ४ ) होमकाले यजमानाग्न्यादिमध्ये न गन्तव्यम्—

द्वौ विप्रौ ब्राह्मणाग्नी वा दम्पती गोद्विजोत्तमौ । अन्तरेण यदा गच्छेत् कृच्छ्रं सान्तपनं चरेत् ॥
होमकाले तथा दोहे स्वाध्याये दारसङ्ग्रहे । अन्तरेण यदा गच्छेद् द्विजश्चान्द्रायणं चरेत् ॥

( ५ ) "गणाधिपतये देया प्रथमा तु वराहुतिः" । इति वचनात् प्रथमं गणपतये होमः । अम्बिकायै होमस्तु न कुत्राप्युक्तः ॥

वरत्वं तु उक्तं प्रमाणद्विगुणप्रमाणत्वमर्धाधिकप्रमाणत्वं वा । समिधिदैर्घ्यविषयमेव द्वैगुण्यप्रमाणमर्धाधिकत्वं वा । विना स्पष्टवचनमेकदा समिद् द्वयाधाने दोषश्रवणादिति संस्काररत्नमालायाम् ।

हवामहे व्वसो मम । आहमंजानि गर्ब्भधमात्वमंजासिगर्ब्भधम् स्वाहां "इदं गणपतये नमम" ।

ॐ अम्बेऽअम्बिकेम्बांलिके नमांनयति कश्चन । ससंस्त्यश्वकः सुभंद्रिकां काम्पीलवासिनीम् स्वाहां "इदम् अम्बिकायै नमम" ।

इस मन्त्र से सूर्य के लिये हवन करे—

ॐ आ कृष्णेन रजंसा वर्तमानो निवेशयंन्नमृतं मर्त्यंञ्च । हिरण्ययेन सविता रथेनादेवो यांति भुवनानि पश्यन् स्वाहां" इदं सूर्याय नमम ।

इस मन्त्र को पढ़ पालश से चन्द्रमा के लिये हवन करे—

ॐ इमं देवाऽअसपत्न ꣳ सुवध्वं महते क्षत्रायं महते ज्यैष्ठ्यांय महते जानंराज्यायेन्द्रस्येन्द्रियाय । इमममुष्यं पुत्रममुष्यैं पुत्रमस्यै व्विश ऽएष वोऽमी राजा सोमोऽस्माकं ब्राह्मणाना ꣳ राजा—स्वाहां" इदं चन्द्रमसे नमम ।

"स्नास्यतो वरुणः कान्तिं जुहृतोऽग्निः श्रियं हरेत् । भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम्" ॥

अत्र समिदेकैका होतव्या । दूर्वाणां दर्भाणां च त्रिकं त्रिकम् । दूर्वाः सप्तपत्रयुतापञ्चपत्रयुता वा, अच्छिन्ना ग्राह्याः दर्भाः साग्राः

इस मन्त्र को पढ़ खदिर से मङ्गल के लिये हवन करे—

ओ३म् अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्या ऽअयम् । अपा ᳪ रेता ᳪ सि जिन्वति—स्वाहा" इदं मङ्गलाय नमम ।

इस मन्त्र को पढ़ अपामार्ग से बुध के लिये हवन करे—

ओ३म् उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते स ᳪ सृजेथामयं च । अस्मिन्त्सधस्थे ऽ अध्युत्तरस्मिन्-विश्वे देवा यजमानश्च सीदत—स्वाहा" इदं बुधाय नमम ।

इस मन्त्र को पढ़ पिप्पल से बृहस्पति के लिये हवन करे—

ओ३म् बृहस्पते ऽ अतियदर्य्यो ऽ अर्हा द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऽ ऋतप्रजाततद-मासु द्रविणं धेहि चित्र ᳪ स्वाहा" इदं बृहस्पतये नमम ।

इस मन्त्र को पढ़ गूलर से शुक्र के लिये हवन करे—

ओ३म् अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमम्प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपान ᳪ

 

शुक्रमन्धंस॒ऽ इन्द्रंस्येन्द्रियमि॒दम्पयो॒ऽमृत॒ऽ मधु॒-स्वाहां" इदं शुक्राय नमम ।



इस मन्त्र को पढ़ शमी से शनि के लिये हवन करे—

ॐ शन्नो॑ दे॒वीर॒भिष्ट॑य॒ऽ आपो॑ भवन्तु पी॒तये॑ । शंय्योर॒भि स्र॑वन्तु न॒ःस्वाहां" इदं शनये नमम-

इस मन्त्र को पढ़ दूर्वा से राहु के लिए हवन करे ।

ॐ कया॑ नश्चि॒त्रऽ आ भु॑वदू॒ती स॒दावृ॑ध॒ः सखा॑ । कया॒ शचि॑ष्ठया वृ॒ता-स्वाहां" इदं राहवे नमम।

इस मन्त्र को पढ़ कुश से केतु के लिये हवन करे—

ॐ के॒तुं कृ॒ण्वन्न॑के॒तवे॒ पेशो॑ मर्य्याऽ अपे॒शसे । समु॒षद्भि॑रजायथाः स्वाहां" इदं केतवे नमम ।

इस मन्त्र को पढ़ त्र्यम्बक के लिए हवन करे—

ॐ त्र्यम्बकं यजामहे सुग॒न्धिम्पु॑ष्टि॒वर्ध॑नम् । उ॒र्वा॒रु॒कमि॑व॒ बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒ माऽमृता॒त् । स्वाहां" इदं त्र्यम्बकाय नमम ।

इस मन्त्र से उमा देवी के लिये हवन करे—

ॐ श्रीश्च॑ ते ल॒क्ष्मीश्च॒ पत्न्या॑वहोरा॒त्रे पा॒र्श्वे नक्ष॑त्राणि रू॒पम॒श्विनौ॒ व्यात्त॑म् । इ॒ष्णन्नि॑षाण॒ मुम्मं॑ 

ऽइषाण सर्वल्लोकम्मंऽइषाण-स्वाहां ।

इस मन्त्र से स्कन्द देवता के लिये हवन करे—

ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्यं पक्षा हरिणस्यं बाहूऽउपस्तुत्यम्महि ज्ञातन्तेंऽअर्व्वन्–स्वाहा" इदं स्कन्दाय नमम ।

इस मन्त्र से विष्णु के लिए हवन करे-

ॐ विष्णों रराटमसि व्विष्णोः श्नप्त्रेंस्थो व्विष्णोः स्यूरंसि व्विष्णों ध्रुवोऽसि । व्वैष्णवमसि व्विष्णवे त्वा-स्वाहा" इदं विष्णवे नमम ।

इस मन्त्र से ब्रह्मा के लिए हवन करे-

ॐ ब्रह्म जज्ञानम्प्रथमं पुरस्ताद्विसीमतः सुरुचोंव्वेनऽ आंवः । स बुध्न्याऽ उपमाऽ अस्य व्विष्ठाः सतश्च योनिमसंतश्च व्विवः–स्वाहा" इदं ब्रह्मणे नमम ।

इस मन्त्र से भगवान् इन्द्र के लिये हवन करे-

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवें हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ

स्वस्ति नो मघवा धात्विन्द्रः-स्वाहा" इदमिन्द्राय नमम ।

इस मन्त्र से यम के लिये आहुति देवे-

ॐ असि यमोऽ अस्यादित्योऽ अर्व्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन समया विपृक्तऽ आहुस्ते त्रीणि दिवि बन्धनानि-स्वाहा" इदं यमाय नमम ।

इस मन्त्र से काल के लिए आहुति देवे—

ॐ काषिरसि समुद्रस्य त्वाऽक्षित्याऽउन्नयामि । समापोऽअद्भिरग्मत समोषधीभिरोषधीः-स्वाहा ॥ इदं कालाय नमम ।

इस मन्त्र से चित्रगुप्त के लिये हवन करे-

चित्रावसो स्वस्ति ते पारमशीय-स्वाहा" इदं चित्रगुप्ताय नमम ।

इस मन्त्र से अग्नि के लिए हवन करे-

ॐ अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ ऽऽआसादयादिह-स्वाहा" इदमग्नये नमम ।

इस मन्त्र से जल देवता के लिए हवन करे–

ओ३म् अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः । देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजं सेत्–स्वाहा" इदं मरुद्भ्यो नमम ।

इस मन्त्र से पृथिवी देवी के लिए हवन करे–

ओ३म् स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः-स्वाहा" इदं पृथिव्यै नमम।

इस मन्त्र से विष्णु देवता के लिए हवन करे–

ओ३म् इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे–स्वाहा" इदं विष्णवे नमम ।

इस मन्त्र से पढ़ इन्द्र के लिए हवन करे–

ओ३म् सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूँ रप मृधो नुदस्वाथा भयं कृणुहि विश्वतो नः–स्वाहा" इदमिन्द्राय नमम ।

इस मन्त्र से इन्द्राणी के लिए आहुति देवे।

ओ३म् अदित्यै रास्नासीन्द्राण्या उष्णीषः । पूषासि घर्माय दीष्व—स्वाहा" इदमिन्द्राण्यैन मम ॥

इस मन्त्र से प्रजापति के लिये आहुति देवे—

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य पिताऽसावस्य पिताव्वयᳬस्याम पतयो रयीणाᳬ स्वाहा" इदं प्रजापतये न मम।

इस मन्त्र से सर्पों के लिये आहुति देवे—

ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः-स्वाहा" इदं सर्पेभ्यो नमम।

इस मन्त्र से ब्रह्मा के लिये आहुति देवे—

ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचोव्वेनऽ आवः। सबुध्न्याऽउपमाऽअस्यव्विष्ठाः सतश्च योनिमसतश्च व्विवः-स्वाहा" इदं ब्रह्मणे नमम।

इस मन्त्र से गणपति के लिये आहुति देवे—

ॐ गणानान्त्वा गणपतिᳬ हवामहे प्रियाणान्त्वा प्रियपतिᳬ हवामहे निधीनान्त्वा निधिपतिᳬ हवामहे व्वसो मम। आऽहमजानि गर्भधमात्वमजासि गर्भधम्-स्वाहा" इदं गणपतये नमम। ॥१०८॥

इस मन्त्र से दुर्गा देवी के लिये आहुति देवे–

ॐ अम्बे ऽअम्बिकेऽम्बालिके न मां नयति कश्चन। ससंस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्– स्वाहा" इदं दुर्गायै नमम।

इस मन्त्र से वायु देवता के लिये आहुति देवे–

ॐ वातो वा मनो वा गन्धर्वाः सप्तविꣳशतिः। तेऽअग्रेश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः– स्वाहा" इदं वायवे नमम।

इस मन्त्र से आकाशदेवता के लिये आहुति देवे–

ॐ ऊर्ध्वाऽअस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः। द्युमत्तमा सुप्रतीकस्य सूनोः– स्वाहा" इदमाकाशाय नमम॥

इस मन्त्र से अश्विनीकुमारी के लिये आहुति देवे–

ॐ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि–स्वाहा" इदमश्विभ्यां नमम।

इस मन्त्र से इन्द्र के लिये आहुति देवे—

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रꣳ—स्वाहा" इदमिन्द्राय नमम ।

इस मन्त्र से अग्नि देवता के लिए आहुति देवे—

ॐ अग्निं दूतम्पुरोदधे हव्यवाहमुपब्रुवे । देवा ꣳ२॥ आसादयादिह—स्वाहा" इदमग्नये नमम ।

इस मन्त्र को पढ़कर यम के लिये आहुति देवे—

ॐ असि यमोऽ अस्यादित्योऽ अर्व्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन समया विपृक्तऽ आहुस्ते त्रीणि दिवि बन्धनानि—स्वाहा" इदं यमाय नमम ।

इस मन्त्र से निर्ऋति देवता के लिये आहुति देवे—

ॐ एष ते निर्ऋते भागस्तञ्जुषस्व स्वाहाऽग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा यमनेत्रेभ्यो ॥१०९॥
देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात सद्भ्यः स्वाहा मित्राऽवरुणनेत्रेभ्यो

वामरुन्नेत्रेभ्यो वा देवेभ्यंऽ उत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्यंऽ उपरिसद्भ्यो दुवस्वद्भ्यः– स्वाहा" इदं निर्ऋतये नमम ।

इस मन्त्र से वरुण देवता के लिये आहुति देवे–

ॐ इमम्मे व्वरुण श्रुधी हवमद्या चं मृडय । त्वामवस्युराचके–स्वाहा" इदं वरुणाय नमम ।

इस मन्त्र से वायु देवता के लिये आहुति देवे—

ॐ वायुरग्ग्रेगायज्ञप्रीः साकं गन्मनसा यज्ञम् । शिवो नियुद्भिः शिवाभिः–स्वाहा" इदं वायवे नमम ।

इस मन्त्र से कुबेर देवता के लिये आहुति देवे—

ॐ कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्वं व्वियूयं । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमऽउक्तिं यजन्ति–स्वाहा" इदं कुबेराय नमम ।

इस मन्त्र से देवता के लिये आहुति देवे—

ॐ ईशाव्वास्यमिदठं॰ सर्व्वं यत्किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्-स्वाहा" इदमीशानाय नमम ।

इस मन्त्र से अनन्त के लिये आहुति देवे—

ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । येऽ अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा" इदमनन्ताय नमम ।

इस मन्त्र से ब्रह्मा के लिये आहुति देवे—

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽ आवः । स बुध्न्याऽ उपमाऽ अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा" इदं ब्रह्मणे नमम ।

## अथ सर्वतोभद्रदेवता होमः[१]--

१ ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे नमम ।

२ ॐ सोमाय स्वाहा इदं सोमाय नमम ।

३ ॐ ईशानाय स्वाहा इदमीशानाय नमम ।



(१) मण्डलदेवता होमः प्रधानहोमात्पूर्वं परं वा कार्यमिति पक्षद्वयं संस्काररत्नमालादौ वर्तते !